आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११४

# रुद्राध्यायः ।

विष्णुसूरिविरचितभाष्यसंवलितः ।

मारुलकरोपाह्वशंकरशास्त्रिभि संशोधितः ।

सच

रावबहादूर इत्युपपदधारिभिः — गङ्गाधर बापूराव काळे, जे. पी.

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् 'महादेव चिमणाजी आपटे'

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा प्रकाशितः

शालिवाहनशकाब्दाः १८७९

खिस्ताब्दाः १९५८

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः । )

ॐ

## रुद्राध्यायस्य भूमिका ।

**पायादपायाज्जगदीश्वरो नः ।**

दधानमेकादशधा विभक्त—
देहं विशुद्धस्फटिकप्रकाशनम् ।
तेजोनिधिं शूलिनमिन्दुमौलिं
विचिन्तयेत्तत्र सदैव रुद्रम् ॥

रुदं संसाररुदं शोकं द्रावयतीति रुद्रश्चराचरगुरुर्महेश्वरस्तत्स्तावकोऽध्याय एकार्थकविषयसमाप्तिद्योतको भागविशेष इति व्युत्पत्तेः कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमः प्रपाठकः 'नमस्ते रुद्र मन्यवे' इत्यारभ्य 'जम्भे दधामि' इत्येतदन्त एकादशानुवाकात्मको रुद्राध्याय इत्युच्यते । तथा चोक्तं तदुपोद्घाते सायणाचार्यैः—'रुद्राध्याये पञ्चमे तु' इति । पञ्चमप्रपाठकरूपे रुदाध्याये त्विति तदर्थः । तथा नमस्ते रुद्रेत्यादिनमकाध्यायं व्याख्यायोक्तम्—'तमिममेकादशानुवाकात्मकं रुद्राध्यायं विनियुङ्क्ते' इति चेति ।

नन्वेवं वैदिकप्रसिद्धिविरोधः । वैदिकसंप्रदाये, नमकचमकसंज्ञके प्रपाठकद्वयं मिलित्वा 'रुद्राध्यायः' इति हि प्रसिद्धम् । अत एव स्वतन्त्रे रुद्राध्यायग्रन्थे चमकनिरूपणं संगच्छते । अन्यथा तदसंगतं स्यात् । इति चेदुच्यते । नमकशब्देन व्यवह्रियमाणः पञ्चमप्रपाठक एव रुद्राध्यायः । निरुक्तसायणाचार्योक्ति प्रामाण्यात् । नमकान्तर्गतप्रत्येकानुवाकव्याख्यानसमाप्तिपट्टिकायां 'पञ्चमप्रपाठके रुद्रभाष्ये प्रथमोऽनुवाकः' इत्येवं रीत्या रुद्रशब्दोल्लेखसहकृतात् 'चमकान्तर्गतप्रत्येकानुवाकव्याख्यानसमाप्तौ सप्तमप्रपाठके चमकभाष्ये प्रथमोऽनुवाकः' इत्येवं रीत्या रुद्रशब्दमप्रयुज्यैव भेदेन निर्देशाच्च । यदि तूभयं नमकचमकं मिलित्वा रुद्राध्यायशब्दार्थः स्यात्तदा चमकानुवाकसमाप्तिपट्टिकायामपि 'रुद्रभाष्ये चमकाध्याये प्रथमोऽनुवाकः । इत्येवं रुद्र-

शब्दोल्लेखोऽवश्यं कृतः स्यात् । यतश्चोभयत्र नमके चमके च भेदेनोल्लेखं करोति तस्मादेवं ज्ञायते यन्नमकस्यैव रुद्राध्याय इति व्यवहारो न चमकस्येति । अत एव 'एकादशगुणान् रुद्राञ्जपित्वा रुद्रतां व्रजेत्' इत्यादौ बृहत्पराशराद्यैश्चमकं विनैव रुद्राध्यायमात्रस्यैकादशधाऽऽवृत्तिरुक्ता संगच्छत इति केचिदाहुः ।

तन्न । नमकचमकयुगलमेव हि रुद्राध्यायः । रुद्रस्तावकत्वे सत्येकार्थकविषयसमाप्तिद्योतकभागविशेषत्वस्योभयत्राप्यविशेषात् । युज्यते चैतत् । तथा हि रुद्रस्य जपे होमेऽभिषेके च विनियोगः श्रुतिस्मृत्यादौ दृश्यत इत्यतः 'पञ्चाङ्गरुद्राणां जपहोमार्चनविधिं व्याख्यास्यामः' इति बौधायनापस्तम्बाद्यैः प्रतिज्ञाय जपादिषु रुद्रस्य विनियोग एवमभिहितः । जपहोमार्चनविषयकत्वेन त्रिविधोऽप्ययं रुद्रः प्रत्येकं पञ्चधा भवति । रूपं रुद्रो रुद्री महारुद्रोऽतिरुद्रश्चेति । तत्र नमकचमकमात्रमुभयं रूपम् । रुद्राध्यायस्वरूपमित्यर्थः । नमकचमकयुगलस्य क्रमेण पठनं सकृदावर्तनमिति यावत् । तदुक्तं—'नमस्ते रुद्राग्नाविष्णू इत्यध्यायद्वयेन च । आवर्तनमिति प्रोक्तम्' इति एकादश नमकानुवाकान् पठित्वा चमकानुवाकमाद्यं पठेत् । पुनस्तान् पठित्वा द्वितीयं चमकानुवाकं पठेत् । इत्येवमेकादशावृत्त्या रुद्रो रुद्रैकादशिनीति चोच्यते । तदुक्तम्—'एकः पाठो नमस्तेऽस्य ह्यनुवाकः परस्य च' इति । तैरेकादशरुद्रै रुद्री लघुरुद्र इति चोच्यते । तदुक्तं—'तैरेकादशभी रुद्रैर्लघुरुद्रः प्रकीर्तितः' इति । तैरेकादशभिर्महारुद्रः । 'तदुक्तं—एकादशभिरेतैस्तुमहारुद्रः प्रकीर्तितः' इति । एकादशभिर्महारुद्रैरतिरुद्रः । 'तदुक्तं—'एकादशमहारुद्रैरतिरुद्रो बुधैः स्मृतः' इति ।

अत्र सर्वत्र जपादौ नमकचमकयुगलस्य विनियोगाभिधानात्तादृशाध्यायद्वयस्यैव रुद्रशब्दार्थत्वं निर्विवादं प्रतीयते । यदि तु पूर्वपक्ष्युक्तरीत्या नमकस्यैव रुद्रशब्दार्थत्वं स्यात्तदा रुद्रविनियोगं प्रकृत्य नमकचमकाध्यायद्वयस्य विनियोगाभिधानं बौधायनापस्तम्बादिभिः कृतमत्यन्तानुचितं स्यात् । तस्मान्नमकचमकाध्यायद्वयस्यैव मिलितस्य रुद्राध्याय इति व्यवहारः सर्व-

जनीनः सिध्यति । अत एव च रुद्रभाष्ये नमकव्याख्यानवच्चमकव्याख्या-
नमपि नासंगतम् ।

नन्वेवं चेन्नमकस्यैव रुद्रशब्दार्थत्वं स्वीकृत्योक्तायाश्चमकं विनैवैकादशधा रुद्रावृत्तेः का गतिरिति चेत् । वियदुपसंहान्यायेन तत्रापि चमकप्राप्तेर्दुर्वारत्वात् । छान्दोग्ये 'तत्तेजसोऽसृजत' इत्यादिना त्रयाणामेव तेजोबन्नानामुत्पत्तिः श्रूयते । तैत्तिरीयके तु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिना तेजोबन्नापेक्षयाऽधिकयोराकाशवाय्वोरुत्पत्तिर्दृष्टा । तथा चाऽऽकाशतेजसोरुत्पत्तिप्राथम्ये विरोधः । किमाकाशः प्रथममुत्पन्नस्तेजो वेति । एतद्विरोधपरिहाराय छान्दोग्यश्रुतावाकाशवाय्वोरुपसंहारोऽभिहितःशांकरभाष्ये वियदधिकरणे । आकाशं वायुं च सृष्ट्वा तत्तेजोऽसृजतेति । सोऽमुपसंहारन्यायः । तद्वदत्रापि तत्तन्नमकपाठान्ते चमकाद्याद्यनुवाकं क्रमेण प्रपठचेत्येवंरीत्या रुद्राणां नमकानामेकादशधाऽऽवृत्तिरिति व्याख्येयामिति तात्पर्यम् ।

अथवा बृहत्पराशराद्युक्तं प्रयोभान्तरमेवेदं नत्वेकादशिनीस्वरूपम् । रुद्रैकादशिनीमहारुद्रादिप्रकारामत्रानुक्तेति शान्तिरत्ने ( पृ० ७७ ) स्पष्टम् ।

नन्वेवमपि सायणाचार्यैरनुवाकव्याख्यानसमाप्तौ रुद्रैकदेशे नमके रुद्रभाष्य इत्येवं रुद्रशब्दप्रयोगः कथं कृत इति चेत्तत्रोच्यते । समुदायवृत्ताः शब्दा अवयवेऽपि वर्तन्ते । यथा पटकदेशे दग्धे पटो दग्ध इत्येवं समुदायवृत्तस्य पटशब्दस्यावयवेऽपि प्रयोगः । यथा वा ग्रामैकदेशे पलायिते ग्रामः पलायित इत्येवं ग्रामशब्दस्य ग्रामैकदेशे प्रयोगो लोकप्रसिद्धस्तद्वदत्रापि नमकचमकयुगलात्मकसमुदायार्थप्रतिपादकस्य रुद्रशब्दस्य तदेकदेशे नमके गौणः प्रयोग इति बोध्यम् ।

तस्यास्य रुद्राध्यायस्य कर्मकाण्डे पाठात्, 'चमकं नमकं चैव पौरुषं सूक्तमेव च । नित्यं त्रयं प्रयुञ्जानो ब्रह्मलोके महीयते' इति स्मृतेश्च कर्मसाधनत्वमवगम्यते । ज्ञानहेतुत्वमप्यस्य कैवल्योपनिषदि दृश्यते—अनेन ज्ञानमाप्नोति संसारार्णवनाशम् । तस्मादेनं विदित्वैव कैवल्यफलमश्नुते ॥ इति ।

यद्यप्ययं रुद्राध्यायः केवलं पाठमात्रेणैवाभीष्टफलदो भवति तथाऽपि—यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति

कर्हिचित् । इति यास्कोक्तेरर्थानभिज्ञस्य निन्दितत्वात् ‘ योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ’ इत्यर्थज्ञस्य पापदाहस्वर्गप्राप्त्यादिसकलभद्रावाप्तिकथनेन स्तुतत्वात् ‘ यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति ’ इति छन्दोगैः केवलमन्त्रपाठपूर्वककर्मानुष्ठानापेक्षयाऽर्थज्ञानसहिते कर्मानुष्ठाने फलातिशयाभिधानाच्चार्थज्ञानं सुतरामावश्युकमित्यालक्ष्य सायणाचार्यैः कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां भाष्यं व्यराचि । तदन्तर्गतमेवेदं रुद्राध्यायभाष्यमिति प्रागुक्तमेव ।

ननु यदि चतुर्वेदभाष्यकृद्भिः सायणाचार्यैं रुद्राध्यायोपरि भाष्यं लिखितं तर्हि किमर्थमयं विष्णुसूरीणां भाष्यप्रणयनप्रयास इति चेच्छृणु । सायणाचार्यैः कर्मपरतयाऽयं रुद्राध्यायो व्याख्यातः । तदुक्तं तैरेव तदुपोद्घाते—इह कर्माङ्गता यादृग्वर्णिता ब्राह्मणेन ताम् । बोद्धुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥ इति । विष्णुसूरिभिस्त्वध्यात्मपरतयाऽयं लापित इत्यस्ति विशेष इति कृत्वा सफलोऽयं प्रयासः ।

नन्वध्यात्मपरतया व्याख्याने किमस्मिन्रुद्राध्याये निरुपाधिकः स्तूयते सोपाधिको वा ? नाऽऽद्यः । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ’ इति श्रुत्या निरुपाधिकस्य वाङ्मनसयोरगोचरत्वाभिधानेन स्तुतिविषयत्वात्यन्तासंभवात् । द्वितीयेऽपि किं जीव ईश्वरो वा स्तूयते ? । नाऽऽद्यः । स्तोता हि खलु जीवः प्रसिद्धः । यदि स्तव्योऽपि जीवः स्यात्तर्ह्येकस्यैव विरुद्धकर्तृत्वकत्वधर्मसमवायप्रसङ्गात् । द्वितीयपक्षेऽपि किं त्रिनेत्रत्वशशिशेखरत्वविशिष्टव्यक्तिविशेषः कैलासवासी श्रीरुद्रः स्तूयत आहोस्विद्विशुद्धसत्त्वप्रधानमायोपाधिरीश्वरः ? । नाऽऽद्यः । यथाश्रुते तथा प्रतीयमानत्वेऽप्यध्यात्मपरतया पदानां योजने तथाऽप्रतीतेः । ‘ एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः । एकं सन्तं बहुधा कल्पयन्ति ’ इत्येवमादिश्रुतिषु मायोपाधेरीश्वरस्यैव सर्वस्तव्यमूर्धाभिषिक्तत्वेन प्रतिपादनात् । तस्मादध्यात्मपरतया व्याख्याने सति विष्णुसूरिकृतेऽस्मिन्रुद्रभाष्ये मायोपाधिरीश्वर एव स्तूयत इति सिध्यति ।

नन्वस्य रुद्राध्यायस्य यथाश्रुतार्थे शशिखण्डमण्डनत्वादिविशिष्टशिवस्व-

रूपस्तावकत्वं परित्यज्याध्यात्मपरतया व्याख्याने किं बीजमिति चेच्छृणु सावधानतया । यथाश्रुते स्तेनानां स्तायूनामारण्यानां मुष्णतां कुलुञ्चानां पतये नम इत्यादिपदानामर्थालोचने भगवतः श्रीशिवस्य महत्त्वभङ्गः स्वारस्यभङ्ग उपासकानामानन्दभङ्गश्च स्यात् । तथा—आसीनेभ्यः शयानेभ्यस्तिष्ठद्भ्यो धावद्भ्य इत्यादीनां स्वभावोक्त्यनुकारमात्रत्वेन तथा तक्षभ्यो रथकारेभ्य कुलालेभ्य कर्मारेभ्यश्च वो नम इत्यादीनां तत्तज्जात्यनुवादेन स्तुतिर्वा निन्दा वेति संशयास्पदतैव स्यात् । न च सर्वतादात्म्यवर्णनेन रुद्रस्य स्तूयमानत्वान्न दोष इति वाच्यम् । सर्वतादात्म्यवर्णने हि सामान्यवचनं भवति । 'यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः' इति सामान्येनापि तत्सिद्धेः । यथा वृक्षरूप इत्युक्तौ पुष्पफलादिरूपत्वमर्थत एवाऽऽपन्नं भवति । इह तु वृक्षेभ्यो हरिकेशेभ्य इत्युक्त्वा पुनः पर्ण्याय पर्णशद्याय, इति विशिष्य प्रतिपादनमनर्थकमिव प्रतिभाति । वृक्षेभ्यो हरिकेशेभ्य इत्यस्य वृक्षरूपोऽयं रुद्र इति तात्पर्यम् । पर्ण्याय पर्णशद्याय, इत्यस्य च पर्णरूपः पर्णसंघातरूपोऽयं रुद्र इत्यर्थः । तथा च वृक्षरूपोऽयं रुद्र इत्युक्तावर्थत एव पर्णरूपोऽयमित्युक्तं भवतीति पर्ण्यायेत्यादि पुनरुक्तमिव प्रतीयत इति यावत् । निरुक्तपदानां विष्णुसूरिकृतोऽर्थो नमकेऽष्टमनवमानुवाकयोर्द्रष्टव्यः । अपि च स्तुतिर्हि द्विविधा । यथार्थाऽयथार्था चेति । तत्र स्तोतव्येऽर्थे विद्यमानामेव गुणानां वर्णनं यथार्था स्तुतिः । यथा—'यो रुद्रो यो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु' इत्यादिका । अविद्यमानानां गुणानां वर्णनमयथार्था । यथा—त्वमिन्द्रोऽसि वरुणोऽसि, इत्यादिरूपा । नच तावन्निरवद्ये परमेश्वरे तस्करत्वादिधर्माः स्तुतिविषयत्वेन युज्यन्ते । उपाधिधर्मास्ते यद्युपहितेऽपि प्रयुज्यन्ते तर्ह्यध्यारोप एव स्यान्न स्तुतिः । इष्टापत्तिरेवेति चेत् हन्त तर्ह्यध्यारोपापवादप्रक्रियायाऽध्यात्मपर एवायं रुद्राध्याय इत्यापद्यते । किंच सकलोऽपि वेदोऽध्यात्मपर एवैत्यद्वैतिनां सिद्धान्तः । स्थूलदृशः केचन तस्य कर्मपरतां वर्णयन्तीत्यन्यदेतत् । तस्मादध्यात्मपरतयाऽस्य रुद्राध्यायस्य व्याख्यानं नातीवासंगतम् ।

नन्वेवे चेद्ब्राह्मणग्रन्थे कथं रुद्राध्यायः कर्मपरत्वेनोक्तः। कथं च सायणाचार्यैरपि कर्मपरत्वेनास्य व्याख्यानं कृतमिति चेत् । सहसैवातिसूक्ष्ममध्यात्मपरत्वं बोद्धुमसमर्थानां स्थूलदृशां दृष्ट्यनुसारेणैव तथोक्तं तथा व्याख्यातं चेत्यवेहि । तदुक्तं मधुसूदनसरस्वतीभिः स्वकृते प्रस्थानभेदे—' नहि ते मुनयो भ्रान्ताः, सर्वज्ञत्वात्तेषाम् । किंतु बहिर्विषयप्रवणाणामापाततः पुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यवारणाय तैस्तथा तथा भेदाः प्रदर्शिताः ' इति. अध्यात्मपरतयेदं व्याख्यानं लक्षणाद्युत्तानार्थत्याघक्लिष्टकल्पनाद्याश्रयेण पदानां संगतिप्रदर्शने क्लेशावहत्वान्नातीव सुगममित्यास्तां तावत् । सोऽयं विष्णुसूरिश्चत्वारिंशतः संवत्सरेभ्यः प्राङ्मिरजाभिधायां पट्टवर्धनराजधान्यां तपस्विनोर्मातापित्रोरीश्वरप्रसादाल्लब्धजन्माऽतिमेधावी वैद्योपाभिधः कश्चन पण्डित आसीदिति कर्णोपकर्णिकया श्रूयते । अस्य रुद्रभाष्यस्याऽऽदर्शभूतमेकमेव पुस्तकम् । तच्च हस्तलिखितम् । तादृशमपि द्वितीयं पुस्तकं प्रणेत्रा लेखकद्वारा नैव संपादितमिति परिशोधान्तेऽवगतम् । विषयश्चास्यातिगहनोऽध्यात्मम् । तदपूर्वस्यास्य ग्रन्थस्य संशोधनकर्मणि प्रवृत्तस्य मम स्थले स्थले यत्स्खलितमस्ति तदावेदनेनानुगृह्णन्तु मामानन्दाश्रमग्रन्थावलीग्राहका दयालवो विद्वांस इति श्रीसच्चिदानन्दचरणयोः संप्रार्थयते—

मालकरोपाह्वः शंकरशास्त्री—भारद्वाजः ।

ॐ तत्सद्ब्रह्मणे नमः ।

विष्णुसूरिकृतभाष्यसहितः—

# रुद्राध्यायः ।

ॐ प्रपञ्चोपशमं शिवमद्वैतं शान्तं चतुर्थं मन्यन्त इत्यतो रुजं संसाररूपं रुजं द्रावयतीति रुद्र आत्मा शरीरिणां शास्त्रयोनित्वादिलिङ्गैरवसीयते । नारायणादिरप्येवमिति चेद्बाढमनुमन्यामहे । किमिति नामविशेष आग्रहो नाम गोत्रमिति च श्रुतिर्निर्विशेषमेव परं ब्रह्म कारणत्वेनोपादिदेश । क्वचिदुपासनादौ वैश्वानरेन्द्रादिदेवतानानात्वमेकस्यैकं सन्तं बहुधा कल्पयन्त्यग्निं यमं मातरिश्वानमाहुरित्येवमादिभ्यस्तत्र च सवितर्यहोरात्रे इव नामरूपे अविद्यया कल्पिते न परमार्थसती तद्विरुद्धस्वभावत्वाच्छुक्तिरजतादिवत्सेयमविद्या भ्रमावरणविक्षेपाद्युपादानभूता निरवयवस्याप्यवयवरूपिणी नैसर्गिकी शक्तिरग्न्यादिशक्तिवत् । यथाऽग्न्यादिः स्वगतदाहशक्तिं न प्रत्यभिजानाति । विपक्षे स्वयमपि दाहमार्छेन्न पुनः साऽपि तं दहति । तथात्वादेवमात्मा निःसामान्यपरानन्दानुभूतिस्वरूपः स्वाभाविकीं मायाशक्तिं नाभिजानाति । ज्ञातृत्वायोगात् । अज्ञातत्वमसिद्धं तत एव ज्ञानाज्ञानविलक्षणत्वे सति ज्ञानरूपत्वात् । सति तस्मिन्नानन्त्यानुपपत्तेः । नापि सा शुद्धं प्रतिबध्नाति । प्रत्युत लोकैरेवानुभूयते । लोकाश्चाहंकारादयस्तैर्हि साक्षित्वभोक्तृत्वादयः प्रत्यगात्मनीव परमात्मनि नामरूपादिकमध्यस्यते । तावेतौ प्रत्यगात्मपरमात्मानौ नाममात्रभेदौ मलिनबुद्धिभिः पृथगपदिश्येते । विजिज्ञापयिषितोऽयमात्मा वेदानामद्वितीयस्वरूपो न यत्र बन्धमोक्षौ नित्यमुक्तस्वभावत्वात्तथाऽपि लोकाध्यारोपापोहार्थतया न महावाक्यार्थोपदेशवैयर्थ्यप्रसङ्गः । सर्वा अप्येवं श्रुतयोऽध्यारोपापोहार्था इत्यवसेयम् । किंच निर्धर्मक आत्मा कथं जगदुपादानमित्यर्थे संदिहानैस्तस्य विचित्रशक्तित्वानभिज्ञैर्लोकैः कल्पितेयमविद्या तानेवाऽऽवृणोति । मायावी च स देवात्मशक्तिं स्वगुणैर्निगूढामित्येवमादिश्रुतिशतेभ्यो नैसर्गिकत्वं च प्रकृतेर्न स्वसमवेतत्वमपि तु स्वानिवार्यत्व मनुभूयते च साक्षिणो ज्ञानसाधकत्वं नतु बाधकत्वम् । अथवा स्वास्पर्शित्वे सति स्वनियतप्रकाश्यत्वं त्रिगुणात्मिका चेयं प्रकृतिर्न स्वं ब्रह्म स्पृशति । प्रकाश्यते च तेनैव । तत्रेदमुक्तं स्वरूपसती चेयं ब्रह्मरूपत्वान्न व्यभिचरति न वा ग्लायते( ? ) तूष्णीकत्वादिति । विगतावरणविक्षेपदोषायाः सत्त्वमात्रशरी-

रायाः प्रकृतेः प्रतिबन्धकत्वायोगाद्विदेहावस्थायामपि तत्सत्त्वे न विरोध इत्याशयः। पुनरावरणाद्यभाव एव तन्नाश इत्येके। स्वरूपत एवेत्यपरे। इदं तु बोध्यं माया-नियन्तुर्नित्यमुक्तस्यापि परात्मनो मायाविजृम्भितावरणसहकृतान्तःकरणरूपोपाधिरेव जीवभावे हेतुस्तन्निरासे न किंचिदसमञ्जसं संसारबीजानन्त्याच्च। सा न क्षरतीत्यतोऽक्षरात्परतस्तु स कूटस्थ उच्यत इत्येवमादिश्रुतिस्मृतिष्वक्षरेत्युच्यते। तस्य च परात्परज्योतिषो निर्विकल्पतया स्वतो ज्ञातृत्वायोगाच्च मनोबुद्ध्यहंकारचित्तरूपा-न्तःकरणवृत्तिविशेषरूपदृष्टिवैचित्र्येण नानात्वमिव प्रबुद्धमूढभावादिसर्वमुत्पद्यते। तत्रोक्तदृष्टेः सर्वोन्मिलनं जाग्रदर्धोन्मीलनं स्वप्नोन्मीलनं सुषुप्तिरित्येव त्रिगुणात्मकानि त्रीणि नेत्राणि यस्य स एष सर्वोऽपि जीवस्त्र्यम्बक एव। भूतं भवद्भविष्य-द्गिरितृणवृक्षादिकमपि सर्वं रुद्र एव। तस्य सार्वात्म्याभिधित्सयेयमुपनिषत्प्रवृत्ता। तदत्र निरवधिकदयाम्बुधिर्वेदपुरुषः प्रज्ञावत उपशिक्षयन्परमेश्वरं प्रार्थयते। तत्रेयमाद्या ऋक्—

हरिः ॐ

नमस्ते रुद्र मन्यव उतो त इषवे नमः।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः॥ १॥

हे रुद्र ते त्वत्संबन्धिने मन्यवे मायाशक्त्यै नमः। मन्युर्दैन्यं परमात्मनो हि मायासंबाधादेव जीवभावादि दैन्यमनीशया शोचति मुह्यमान इति श्रुतेः। उतो अपि च ते त्वदंशाय इषवे जीवाय नमः। तस्यापि त्वदाभिन्नत्वात्। 'प्रणवोऽस्य धनुः प्रोक्तं शरो जीव उदाहृतः' इति स्मृतेः। धन्वने प्रणवात्मकाय तस्य चाऽऽधारादिस्थानगतदशविधध्वनिरेव टंकारः। सुषुम्नादिशिरावृता रज्जुरित्यलंकर्मस्वभावसहकृतकाल एव धानुष्क इत्येवं यथायथामूह्यम्। अथेदृशबाणलक्ष्यभूतस्य तव बाहुभ्यां धनुर्बाणोपेताभ्यां नम इत्यर्थः। बाहू चात्र विक्षेपावरणशक्तिलिङ्गोपादानतया जीवभावस्य तदधीनत्वात्। धर्माधर्मौ वा तदनुसारेण सुखदुःखे नियते प्रपद्यते सर्वो लोको दक्षिणोत्तरमार्गौ वा धर्ममोक्षादिप्रापकत्वात्तयोर्यथाश्रुतेऽत्र स्पष्ट एवार्थ इति न व्याख्यातः॥ १॥

या त इषुः शिवतमा शिवं बभूव ते धनुः।
शिवा शरव्या या तव तया नो रुद्र मृडय॥ २॥

या त इषुरिति। शरा जीवास्तिष्ठन्ति यस्यां सा शरव्या माया। स्पष्टमन्यत् ॥ २ ॥

ननु शुद्धे वस्तुनि कथं वेदाः प्रवर्तन्ते। यदि प्रवर्तेरन्कथं वा शुद्धत्वमित्यतो वेदवेद्यतया विशुद्धसत्त्वप्रधानवासुदेव एव जगत्कारणमिति चेन्न। निर्विशेषाभिधायकशब्दव्याकोपापत्तेः। यदि कश्चिद्वस्तुनि विशेषोऽभ्युपगम्यते कुप्येरंस्तर्हि सत्यं ज्ञानमित्यादिश्रुतयः। न च गुणवत्त्वमर्थो वतेरश्रवणात्। विपक्षे श्रुत्यन्तरविरोधाच्च। नहि 'शुद्धं दृश्यम्' यत्तदद्रेश्यमिति श्रुतेर्वृत्तिविषयस्य मिथ्यात्वात्तदविषयत्वमेवाऽऽत्मनः। न च शुद्धविषये संदेहः स्यादिति वाच्यम्। वृत्तेः स्वोपहितचैतन्यस्वरूपपरिचयेन तदभिन्नाखण्डचिद्विज्ञानोपपत्तेः। नखनिकृन्तनादिवत्। यथा पृथिवीगतसकलकार्ष्णायसाज्ञानेऽपि नखनिकृन्तनज्ञानेनाशेषमभिज्ञायते। तथा चरमवृत्तिः स्वोपहितं परिच्छिन्नमपि चैतन्यं विषयीकुर्वती तदभिन्नं शुद्धमपि विषयी करोति। न चाभेदाविज्ञानाभावः। स्वग्रहणकाले स्वाभेदस्यापि ग्रहणात्। संवादिन्यायेन मण्यादिवत्। मणिप्रभां मणिबुद्ध्या पश्यन्परमार्थतो भ्रान्तोऽपि यथा तद्ग्रहणकाले मणिमुपलभते। तथा वृत्तेः पूर्णोपलम्भोऽपि। नन्वात्मनो ज्ञातृत्वाभावे कथमीक्षणं श्रुत्युक्तं संगच्छते। निर्विकारत्वाच्च। निर्विकारश्चायमात्मा नेक्षणविकारं लब्धुमर्हति। अद्वितीयश्च, न च तद्द्वितीयमस्ति। येनायं विकारमुपलभताम्। तन्न। मायिकत्वश्रवणात्। मायावी ह्ययमात्मा श्रूयते। मायिनं तु महेश्वरमित्येवमादिषु। न च द्वैतापत्तिरविज्ञातानुकूलत्वादिगुणोपपन्नस्य प्रधानस्य द्वित्वाप्रयोजकत्वात्। वृथा यद्यपि तदीयगुणास्तत्कार्याणि चोपलभ्यन्ते तथाऽपि स्वाज्ञातत्वं तदर्थः। अनुकूलत्वं च यथार्थकर्तृत्वात्। यच्चेदं देवदानवाद्यनेकजीवसमवायं ब्रह्माण्डं तद्यथावदेव सुखदुःखादिकं प्रतिपद्यते। न तत्र विपर्यासगन्धोऽपि। अन्यथा जगद्विप्लवप्रसङ्गात्। सैवास्य शक्तिः सत्यत्वात्सत्यः संकल्पः परमात्मनः स सर्वरसः सर्वगन्धः सत्यकाम इत्येवमादिषु श्रुतिषूच्यते। यच्च ज्ञानसमवेत आत्मा जगदुपादानमेक एव परमेश्वरस्तद्विपरीतधर्माणो जीवा विभवश्च भिन्नाश्च द्वा सुपर्णेत्यादिश्रुतिभ्य इति। तन्न। तत्त्वमसीत्यभेदश्रवणात् समवायासिद्धेश्च। विपरीतधर्मत्वं चासिद्धं सत्यं ज्ञानमनन्तं ब्रह्म य एष आत्मा हृद्यन्तर्ज्योतिरिति च समानधर्मत्वश्रवणात्। द्वयोर्विभ्वोरेकत्र समावेशायोगे बहूनां सुतरां तदयोगात्। आधाराधेयत्वकल्पनायामतिप्रसक्तेश्चेति। न च विरुद्धधर्मश्र-

वणत्वव्याकोपः। औपाधिकत्वमादाय तदुपपत्तेः। किंच यदि जीवादन्य ईश्वरः स्यात्किमात्मकस्तमीशीत। नह्यसंबन्धेन कश्चन नियन्तुं शक्यते। तथा सति प्रबलदुर्बलन्यायप्रसङ्गः। यथैव प्रबलेन दुर्बलो बाध्यते न तत्र धर्मलेशोऽपि। नह्येतदस्ति सर्वधर्मप्रवर्तके सर्वेश्वरे। तस्मादसंगतोऽयं भेदवादः। यच्च निर्विकारस्येक्षणासंभवान्मायाया एव तन्मुख्यं वाच्यम्। तथा जगत्कर्तृत्वादिकमपीति। तन्न। तप्तायःपिण्डदृष्टान्तेन प्रागेव निराकृतत्वात्। अपि च न केवलस्याऽऽत्मन ईक्षणमुपपद्यते। निर्विकारत्वात्। नापि केवलप्रधानस्य। जडत्वात्। नाप्युभयोः। सुषुप्तावदर्शनात्। तत्र वृत्तित्रयसत्त्वेन परामर्शस्यान्यथैवोपपत्तेश्च। 'स ऐक्षत बहु स्यामिति' च जगत्सर्जनादिसंकल्पाः सत्या एव न जीवसंकल्पवत्क्वचिद्व्यभिचरन्ति तत्रेदमाशङ्क्यते। समष्टिबुद्धिशब्दे न श्रुतिः। नैवात्र जगत्यन्तरमुपलभामहे। यत्तु गौणी व्याख्येयमिति मतम्। तन्न। ईक्षतेर्नाशब्दमिति न्यायविरोधात्। परस्याऽऽत्मन ईक्षणमेव मायेति मतान्तरमपि न। उक्तदोषसंवलितत्वात्, मानाभावात्सर्वश्रुतिषु शक्त्यादिशब्दैर्नैव व्यवहारदर्शनाच्च। यच्चान्यद्विद्याशक्त्या परमेश्वरः पश्यति मायां नियच्छति चेति। तन्न। वृत्तिज्ञानस्यैव विद्याविद्याव्यपदेशात्। नहि वृत्तिमन्तरेण विद्याविद्ये नाम केचिद्वर्तेते। तथा सति सुषुप्तावप्युपलम्भप्रसङ्गः। न हि सुप्तौ न भाति नास्ति कूटस्थ इत्यावरणं विक्षेपो वाऽयमात्माऽहमस्मीति ज्ञानं वाऽस्ति। यतो ज्ञानिनोऽज्ञानिनश्च सुषुप्तौ समा एवेति। यत्त्वतीन्द्रियज्ञानमनावृतं परमेश्वरस्य परोक्षमेव तज्जीवानां नानावस्थासु चतसृष्वप्युपलभ्यत इति। तत्रानुयोगः–किं जीववदीश्वरस्यापि तत्परोक्षमुतापरोक्षमिति। आद्ये जीवानामपि तदस्ति। दुर्गतस्य वसुंधरातलस्थधनकुम्भवत्। द्वितीये विदेहावस्थायामपि तद्वाच्यम्। तथा च पूर्वावस्थः संसार एव वरम्। योऽयमीश्वरस्य संसारो ब्रह्मादिस्थावरान्तानन्तजीवविषयः सोपपत्तिकोऽपि न निर्विषयानन्दरूपतासंपत्तिप्रयोजको व्यग्रतासंपादकत्वात्। तथा च पूर्वसिद्धेन किमपराद्धमल्पीयसा संसारेणेति। अत्रोच्यते––ईक्षणं च तावद्वृत्तिरेव। तद्विरहितस्य सुषुप्तौ तददर्शनात्। तानि च प्रतिदेहमन्तःकरणभेदेन बहूनि संपद्यन्ते। तथा च यस्मादयमात्मा बहुरूपो द्रष्टाऽभवत्तस्मात्स बहु स्यामित्यैक्षतेति निश्चीयत इति श्रुत्यर्थः। वस्तुतस्त्वीक्षणं द्विविधमव्यक्तं व्यक्तं च। तत्राव्यक्तं जनिष्यदङ्कुरपूर्वावस्थारूपबीजान्तर्गतगर्भवत्प्रधानान्तर्गतजगत्सर्जनादिसंकल्पो बहु स्यामित्याका-

र्कः। स च बहुरूपेण प्रसृतत्वान्महत्तत्त्वादिरूपेण व्यक्त उच्यते। महत्तत्त्वं चाहंकारसामान्यावस्था। तथा च तदेवेक्षणं सूक्ष्मतमं सूक्ष्मतरं सूक्ष्मं स्थूलं चेति चतुर्विधं संपद्यते। तत्राऽऽद्यमनुमानैकगम्यं तेन इदमिदानीं स्रष्टव्यमिदमिदानीं संहर्तव्यमित्याकारकमायावृत्तिविशेषा अपि सूक्ष्मतमत्वादनुमेया एवेति बोध्यम्। त्रितयं क्रमेण महत्तत्त्वाहंकारचक्षुरादिषु द्रष्टव्यम्। यत्तु पारमेश्वरी समष्टिबुद्धिरन्यैवापरिच्छिन्ना सर्वविषया यस्यामभिजायन्ते जगत्सर्जनादिसंकल्पाः सत्या एव जीवसंकल्पवत्क्वचिन्न व्यभिचरन्तीति। तत्रेदमाशङ्क्यते। समष्टिबुद्धिशब्देन किं जडप्रधानं विवक्षितमुत ज्ञानम्। न द्वितीयः। दत्तदोषत्वात्। आद्ये तु नाममात्रभेद इति न विवादः। मन्मते तु य एव जीवसंकल्पास्त एवेशसंकल्पास्तस्य तदभिन्नत्वात्। ननु कथमेतद्वैषम्यदर्शनात्। तथा हि—यद्यज्जीवः संकल्पयति मोघमेव तत्तज्जायते। न ह्यव्यक्तगतेः परमेश्वरस्य चिकीर्षितं कश्चन वेद। स वेत्ति वेद्यं न च तस्य वेत्तेति च श्रुतेरिति चेत्सत्यम्। उच्यते। इयं हि ब्रह्मवादिनां प्रक्रिया। निर्विशेषपरमानन्दैकरूप आकाशदिवदनन्तश्च तस्य च माया नाम शक्तिरत्युत्कृष्टशुद्धसत्त्वप्रधाना दर्पणस्थानीया तत्प्रकाशकत्वेन स देवः साक्षीत्यपदिश्यते। तस्मिंश्च चेतन आभास इवाचेतनो घटादिरपि बाह्यो विषयः कल्पितस्तथैव स पुनर्भिन्न इव व्यवहारे भासमानोऽपि परमार्थतोऽभिन्न एक एवेत्यादिश्रुतिशतेभ्यः। ततश्च मायायां प्राणिकर्मानुसारेणैव संकल्पविशेषा जायन्ते। कर्माणि च लाघवाद्विविधानि शुभान्यशुभानि च। तानि पुनर्मोघान्यमोघानि चेति द्विविधानि। तत्र लीलाकैवल्यन्यायेन कृतानि कर्माणि मोघानि ततोऽन्यत्रामोघान्येव। तथा च जीवबुद्धिषु द्वये संकल्पा मोघा अमोघाश्च। मोघाः कर्मजा अमोघास्तद्विपरीता इति प्रेक्षावद्भिरवसेयम्। तदेवं मायाविजृम्भितान्तःकरणवृत्तिरेव विषयाभिमुखाऽविद्या, प्रत्यङ्मुखी सती विद्येत्यापद्यते। ते एव हि रुद्रस्य तनू। तत्र कामकर्मकश्मलसंसारभ्रमदायित्वादायित्वादविद्यावृत्तिरशिवेत्युच्यते। तद्विपरीता च विद्यावृत्तिः। स्वरूपानन्दसंपत्तिप्रयोजकत्वात्। तथा च श्रुतिः। विद्यां चाविद्यां च यस्तद्वेदोभय॑ सह। अविद्यया मृत्युं तीर्त्वा विद्यया सुखवश्नुत इति। तत्प्राप्त्यर्थमिदमभ्यर्थ्यते—

या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी।

तया॑ नस्त॒नुवा॒ शन्त॑मया॒ गिरि॑शन्ता॒भि चा॑कशीहि ॥३॥

हे रुद्र तव शिवाशिवयोस्तन्वोरुभयोर्मध्ये या शिवा तनूः सत्त्वोत्कर्षनिमित्ता विद्यावृत्तिः। द्वे हि रुद्रस्य तन्वावित्याम्नायत उपरिष्टात्। रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्येति। सा त्वेवमुच्यते। अघोरा घोरसंसारनिवर्तिकाऽपापं ब्रह्मायमात्माऽपहतपाप्मेति श्रुतेस्तत्प्रकाशिनी दुस्तरत्वाद्गिरिरिव संसारस्तस्मिञ्शेते जीवेश्वररूपेण तिष्ठतीति गिरशंतस्तत्संबोधनं गिरिशंत। शंतमया तया तनुवा विद्याशक्त्याऽभिचाकशीहि। अविद्यापनोदेनाऽऽत्मानं प्रकाशय। स्तुतिपक्षे स्पष्ट एवार्थः ॥ ३ ॥

यदेतत्प्रधानं सर्वकर्मणां क्षेत्रमित्याचक्षते तत्क्षेत्रविदः। पर्जन्यवदीश्वरो यत्र सत्तास्फूर्तिजीवनदानेनानुग्रहीता महत्तत्त्वप्रभृतीनि यतः कर्माण्यभिजायन्ते कर्मानुसारेण बीजानुरोधादिव सस्यानि तदेतत्कार्यजातं यथामर्यादमेवाभिवर्धते विनश्यति चेति तत्स्वभाव एव न तत्र निमित्तान्तरं पश्याम इत्येके। मायैव निमित्तमित्यन्ये। आत्मैवेत्यपरे। नाऽऽद्यस्तेषां कार्यानन्त्येन स्वभावानन्त्यकल्पने गौरवात्, व्यभिचाराच्च। व्यभिचरति चायं स्वभाववादः। कुतः। पदार्थानां स्वभावनैयत्यानिरूपणात्। यो हि कश्चित्पदार्थो द्राघीयसा कालेन वर्धते स एव क्वचिद्दल्पीयसाऽपि। तथाऽशितममृतमपि रोगमावहति विषमप्यारोग्यमादध्यात्सोऽपि निसर्ग एवेति चेन्नूनमतिमेधावी भवान्यतोऽनवस्थातोऽपि न बिभेषि। एवं न द्वितीयः। क्षेत्रस्थानीयत्वेऽपि तस्याः प्रवृत्त्यभयोशकत्वात्। नहि सस्यादेर्भूरस्ति हेतुर्वृद्धौ ह्रासे वेति। न तृतीयः। तस्य प्रकाशमात्रत्वेन तदहेतुत्वात्सूरादिवत्। यथोदेष्यन्नादित्यो न कंचनोत्थापयति प्रस्वापयति वाऽस्तं गच्छन् तथाऽऽत्माऽपि नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुरिति स्मरणात्तदप्रवर्तकः। किं तर्हि निमित्तम्? उच्यते। द्वे हि प्रकृतेः शक्ती परिणामिनी परिणामयित्री चेति। तत्राऽऽद्या विक्षेपशब्देनोच्यते। परा तु कालशब्देन। सा यदि न स्यान्निरङ्कुशमभिवर्धेत विश्वमभिविप्लवेत वा। तस्मात्सर्ववस्तुनियामकत्वेन घटो जातो भविष्यतीत्यादिप्रतीतिसिद्धा कालाख्या शक्तिरवश्यमादर्तव्या। तां विना न किंचित् सिध्येत्। ननु कालोऽमूर्तो न कंचन नियन्तुं शक्नोति। निरर्गलाः खलु लोका यथेष्टमभिवर्तन्ते न कालं गणयन्तीति चेत्सत्यम्। तिस्रः खल्विमा मायाशक्तयः। काल आवरणं विक्षेपश्चेति क्रमेण सत्त्वरजस्तमःप्रधानाः श्रीमद्गौडपादैः शांभवी विद्या श्यामा, इति स्वकृतसूत्रेणाभिहिताः। तत्र कर्मपरिणाम इति निमित्तं काले

विपरीतप्रत्ययरूपं स्मृतिप्रतिबन्धकमावरणं तद्विस्मृतिज्ञानापोहेन प्रमातृबुद्धिं प्रति-बध्नात्येतदग्रे विस्तरतोऽभिधास्यते । नामरूपविजृम्भणं विक्षेपस्तदेतत्त्रितयोपादानं मायाशक्तिरीश्वराधीना । ततश्चास्यामृचि कालशक्तिरभिधीयते—

**यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे ।**

**शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ४ ॥**

इषुवज्जीवबुद्धिवेधकत्वादिषुशब्देन कालशक्तिरुच्यते । तथा च हे गिरिशंत यामिषुं कालशक्तिं हस्ते बिभर्षि । यो हि यदधीनो वर्तते स तद्धस्तगत इत्यवगम्यते । किमर्थं तदाह—अस्तवे जीवेषु निक्षेप्तुं कालाधीनो हि सर्वो लोकस्तस्माद्बिभेति तदेवास्य निक्षेपणम् । गिरिं प्रपञ्चं स्वप्रकाशदानेन त्रायते तत्संबोधनं हे गिरित्र तां शिवां कुरु । यथा जीवा न बिभ्युस्तथा विधत्स्व पुरुषं जगत् । अस्मदीयमिदं जीवाख्यं सर्वं मा हिंसीः शोभनमेव कालं सर्वदा प्रवर्तयेत्यर्थः । सुगमभितरत्र ॥ ४ ॥

अथ यदेतदन्तःकरणं जीवोपाधितया प्रवर्तमानं वासनात्मकं विपरीताध्यासनिमित्तं तन्निरवयवमित्येके । सावयवमित्यन्ये । नाऽऽद्यो मानाभावात् । अविद्याकार्यत्वेन दृश्यत्वाच्च । तन्मनोऽसृजतेति सावयवत्वश्रवणात् । ननु भवतु सावयवं, घटादिवद्दृश्यमदृश्यं वा । नोत्तरः । सरूपत्वेन दृश्यत्वात् । यद्यप्यविद्यादशायां रजस्तमोदूषिततया तमःस्थितघटादिवन्नोपलभ्यते तथाऽपि विद्यादशायां सत्त्वोत्कर्षेण रजआदौ बाधिते दिव्याञ्जनोद्घाटितया तज्जन्यवृत्त्यैव बाह्यविषयवन्निरीक्ष्यते । तथा च बिम्बसूत्रं तदुपलम्भ इति । तत इति तृतीयभूविकातिक्रमोत्तरमित्यर्थः । तथा च तादृशान्तःकरणावच्छेदेन साक्षिणोऽपि प्रमातृतया सकलप्रपञ्चनिर्वाहस्तदपवादेन शुद्धात्मताबोधायेदमुच्यते । शिवेन यथार्थेन वचसा तत्त्वमसीत्याकारकेण त्वा त्वामच्छावदामस्युपाध्यपवादेन स्तुमः । इदं तु बोध्यम् । पर एवाऽऽत्मा बुद्ध्याद्युपाध्यवच्छेदेन जीव इत्यापद्यते । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुषः स एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिश्रुतिभ्यः । ननु सर्वज्ञस्य कथं जीवभावो युक्तिसह इति चेन्न । बाधकाभावात् । तथा हि—किं तावत्सर्वज्ञत्वं सर्वविषयकज्ञानवत्त्वं वा, उपाधिदोषासत्त्वं वा सर्वभास्यभासकत्वं वा । न तावदाद्यः । प्रमाणाभावात् । स

वेत्ति वेद्यमिति श्रुतेरन्यथोपपत्तेः । एक एवाऽऽत्मा सकलबुद्धिप्रतिबिम्बितत्वेन सर्वविषयकज्ञानवानिव प्रतीयते । न परमार्थतः । कुतो बौद्धप्रत्ययावभासकत्वेन स्वतो ज्ञातृत्वायोगाद्बुद्धीनां च युगपत्सर्वविषयकज्ञानाभावात्समष्टिबुद्धेरपि वनवृक्षन्यायेनाखिलबुद्धिसमुदायरूपत्वात्प्रारब्धसंस्काराणां परोक्षत्वेन ज्ञातुमशक्यत्वाद्योगिप्रत्ययस्य धर्मविशेषनिमित्तत्वान्नैवास्ति तादृशसार्वज्ञ्ये प्रामाण्यमिति । अनुपपत्तेश्च । अनुपपन्नं चैवंभूतसार्वज्ञ्यं कुतस्तथात्वेऽविकृतस्यैव परज्योतिषो जीवभावश्रवणं विरुध्येत । न भूतभाविविप्रकृष्टव्यवहितादिसर्वविषयकज्ञानवतः किंचिज्ज्ञत्वानीशत्वाद्युपपद्यते । नहि जाग्रन्नेवं स्वप्नभ्रमेण विभ्रमीति नांशो जीवो निरवयवस्य तदसंभवात् । अनवस्थानाच्च । न च भगवद्वचनविरोधः । क्षेत्रज्ञं चापि मां विद्धीति तेनैव निराकृतत्वात् । व्यूहचतुष्टयवादिनां मतमनुपादेयमेव । श्रुतियुक्तिविरुद्धत्वात् । नापि द्वितीयः । साक्षिण उपाधिसाधकत्वेन बाधकत्वासंभवात् । यद्यात्मा सविकल्पः स्वज्ञानवान्स्यात्तर्हि प्रमाणवृत्तिमन्तरेण स्वयमेवोपाधिं हन्यात् । नह्येतदस्ति । तस्य प्रकाशकमात्रत्वात् । एतेन स्वप्रकाशात्मनि कथमविद्यावस्थानमित्याशङ्कितमपास्तम् । चितो निर्विकल्पज्ञानस्वरूपतयोपपत्तेः । विकल्पो नाम तावदुच्चनीचविमर्शो न सोऽस्त्यात्मनि । तथा सति ब्रह्माद्युत्कृष्टदेहानेव प्रकाशयेन्न सूकरादिनीचयोनीस्तथा विद्यावृत्तीरेव प्रतिसंक्रमेन्नाविद्यावृत्ती । स्वरूपतिरोधायकत्वालोचनात्तस्मात्सूर्योऽग्न्यादिवदविकल्प एव । यथा सूर्यः सविकल्पश्चेद्ब्राह्मणाद्यगाराण्येव किरणैरुपस्पृश्येन्न चाण्डालादिवीथीरेवमग्निर्मेध्यमेवान्नमद्यान्नामेध्यमन्नम् । न तदस्त्येवमात्माऽपि । व्योमादिवच्च । यथा वा व्योम स्वावरकस्याप्यभ्रादेराश्रयो भवति न तद्बाधितुमुत्सहते । एवमात्मा स्वावरकस्याप्यविद्यादेराश्रयः प्रकाशकश्च भवति । निर्विकल्पस्वरूपत्वात् । यत्तु नित्यविज्ञानमात्मनि तत्ततो भिन्नमिति मतं तदनादरणीयम् । यतः स्वरूपभूतमेव तस्य तदग्न्यौष्ण्यादिवन्न ततो भिन्नम् । तदेवं नित्यविज्ञान ईश्वरः पयोरूपः पर्जन्यवद्भूमिस्थानीयायां विशुद्धसत्त्वप्रधानायां प्रकृतौ स्वानन्दरसाभिवर्षी तदवच्छिन्नः साक्षीत्युपदिश्यते । बीजानि च तत्र तत्तज्जीवासाधारणकर्माण्येव । संस्काररूपेण तेषां तत्रावस्थानात् । यथा पर्जन्यः सबीजभूमावभिवर्षन्भूम्यवच्छिन्न इवाऽऽलोक्यते तद्वत् । ततश्च साभासायाः प्रकृतेः सकाशान्नानाविधकर्मसंस्कारजन्यत्वान्नानाजातीयानि महत्तत्त्वाद्यवयवानि लिङ्गशरीराणि जायन्ते । तत्र यथा पर्जन्यरसो मृद्विकार-

बीजाङ्कुरानुस्यूत उपलपर्यन्तमभिव्याप्नोति तथा चिदाभासोऽप्यङ्कुरस्थानीयानि सूक्ष्मशरीराण्यनुगतः सन्स्थूलशरीरमपि व्याप्नोति । वर्धिष्णुना सह वर्धमान इव सहिष्णुना सह सहमान इव चावभासते । स एष जीवः सुखदुःखाद्यनुभवन्निव परिणममान इव भेददर्शिनां भिन्न इव प्रतीयमानोऽप्यभिन्न एव चितेरैक्यात्। अमुना न मायामयत्वान्मृषाभूतेन बुद्ध्याद्युपाधिमता जीवेन सर्वावभासके सर्वेश्वरे साक्षिणि भोक्तृत्वकर्तृत्वादिधर्मास्त्वध्यस्यन्ते । तेन संसारीवावभासमानोऽपि तद्धर्मासंस्पृष्ट एव । न लिप्यते लोकदुःखेन बाह्य इत्यादिश्रुतिभ्यः। तदेवं काल्पनिकजीवत्वव्यावर्तनेन तत्त्वमस्यादिभिः पारमार्थिकब्रह्मभाव उपदिश्यत इति न किंचिदसमञ्जसम्। ननु किमर्थमुपाध्यपवादेन वा मम सर्वेश्वरस्य ब्रह्मभाव उपदिश्यते तदाह—

शिवे॒न॒ वच॑सा त्वा॒ गिरि॒शाच्छा॑ वदामसि ।

यथा॑ नः॒ सर्व॒मिज्जग॑दय॒क्ष्मꣳ सु॒मना॒ अस॑त् ॥ ५ ॥

त्वयि सर्वात्मन्यविद्यासुप्तिमापन्ने सर्वमिदं त्वत्प्रतिबिम्बभूतं जगज्जीवाख्यमयक्ष्मं संसाररोगरहितमत एव सौमनस्योपेतं च न स्यात्ततस्त्वं जागृहि। यथेदं स्वरूपबोधेनापहतपाप्मतया न पुनः संसारपर्यावर्ते भ्रममाप्नुयात् । अपि तु परमानन्दरूपमेव स्यात्तथा त्वामच्छावदामसीति संबन्धः । आगमा हि बन्दिन इव सम्राजं परमेश्वरं स्तुवन्ति । जाग्रद्भावेन परमानन्दसंपत्तये चेति ॥ ५ ॥

एतदेव प्रपञ्च्यते—

अध्य॑वोचदधिव॒क्ता प्र॑थ॒मो दैव्यो॑ भि॒षक् ।

अही॑ꣳश्च॒ सर्वा॑ञ्ज॒म्भय॒न्सर्वा॑श्च यातुधा॒न्यः॑ ॥ ६ ॥

एको देवः सर्वभूतेषु गूढ इति श्रुतेर्देव ईश्वरस्तत्प्रणीतत्वाद्दैव्यः स एव हितोपदेशेन संसाररोगनिवर्तकत्वाद्भिषक् प्रथमः पुराणः श्रेष्ठो वा । स्वतः प्रमाणत्वात् । अत एवाधिवक्ता सर्वज्ञकल्पः सर्वस्यापि तन्मूलकत्वात्स चैवंभूतो देवोऽध्यवोचत्कल्पित जीवभावव्यावृत्त्या पारमार्थिकस्वरूपमुपादिशति स्म यस्य स एष देवो रुद्रो व्यामोहकत्वादहिशब्देन कामादय उच्यन्ते । तांस्तथाऽविद्यावृत्तयोऽपि यातुधानीशब्देनाऽऽत्मविघातकत्वात् । ताः सर्वा अपि जम्भयन्विनाशयन्वर्तते । यद्वा स चैवंभूतो देवरूपो रुद्रो मां जीवमध्यवोचद्ब्रह्मेत्युवाच । तस्माद्ब्रह्मैवाहं

परशिवाभिन्न इति जानीयादिति स्वयं तथा जानन्नितरानुपदिशति वेदपुरुषः ॥ ६ ॥

तस्यैवैषा परा शक्तिः स्वभावामर्शनोत्सुका । पूर्णत्वं सर्वभावानां यस्या नाल्पं न चाधिकम् । एष देवोऽनया देव्या नित्यं क्रीडारसोत्सुकः । विचित्रान्सृष्टिसंहारान्विधत्ते युगपत्प्रभुः । इत्याद्यागमोपदिष्टा माया नाम पारमेश्वरी शक्तिरिति प्रागुक्ततया च स देवो निर्गुणोऽपि [ सगुण ] इवावभासते । तस्य प्रकार उच्यते—

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः

ये चेमाँ रुद्रा अभितो दिक्षु श्रिताः स-

हस्रशोऽवैषाँ हेड ईमहे ॥ ७ ॥

ननु रजआदिमायागुणानां परस्परकार्यकारणभावो वोत त्रयाणामेकमेवोपादानं भिन्नमेव वा प्रत्येकमिति भवत्याशङ्का । नाऽऽद्यः । रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथेत्युक्तरीत्या बाध्यबाधकभावानुपपत्तेः । यदि रजःकार्यं सत्त्वं सत्त्वकार्यं वा रजः स्यात्तर्ह्यल्पसत्ताकं कार्यमधिकसत्ताकं कारणं कथं बाधेत । विरुद्धस्वभावत्वाच्चानुपपत्तिः । विरुद्धस्वभावा हि रजआदयः कथमन्योन्यकार्यभूताः स्युः । कारणसदृशं कार्यं भवति । कारणगुणाः कार्ये संक्रामन्तीति न्यायात् । नहि सत्त्वगुणाः शमादयो रजसि रजोगुणा वा कामादयः सत्त्व उपलभ्यन्ते । येन तयोः कार्यकारणभावः स्यात् । तस्मादनुपपन्नमेतत् न द्वितीयोऽपि । तेषामेव प्रकृतिभावश्रवणात् । तमआदीनामेव गुणानां स्वातन्त्र्येण प्रकृतिभावः श्रूयते । यथा-समस्तसाक्षिं तमसः परस्तात् । नासतासीन्नो सदासीत्तदानीं तम आसीदित्यादौ तमसः, परोरजसेऽसावदो मित्यादौ रजसो निर्विचारवैशारद्येऽध्यात्मप्रसादः, ऋतंभरा तत्र प्रज्ञेति च सत्त्वस्य सर्वशेषतयाऽभिधानात्प्रकृतित्वं श्रूयते । तदन्यकल्पनायामनवस्थानात् । यदि त्रयाणामन्यच्चतुर्थं किमपि कारणं कल्पनीयं तदा तस्याप्यन्यत्तस्याप्यन्यादित्यनवस्थाप्रसङ्गः स्यात् । अत एव न तृतीयोऽपि । कुतः । एकस्मात्कारणाद्विरुद्धस्वभावानां कार्याणामुत्पत्त्यनुपपत्त्या प्रकृतिभेदः कल्पनीयस्तदाऽपि पूर्वोक्तदोषस्तदवस्थ एवेति । कथं तर्हि व्यवस्थितिरिति चेदुच्यते । यो हि यदधिकरणो यदुपजीव्यश्च स तत्कार्यमिति नियमान्नानुपपत्तिः । तथा हि -आवरणात्मकं तमोऽविद्याशब्दवाच्यं विद्या-

त्मकं सत्त्वमुपजीव्य वर्तते । तेन विना तदसिद्धेः । न भाति नास्तीति प्रत्ययो ह्यस्ति भातीति प्रत्ययसापेक्षः । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् । यथा वा जागरस्मृतिमुपजीव्य निद्रारूपा विस्मृतिः प्रवर्तते । नान्यथा तत्सिद्धिः । ततश्च प्रकाशात्मकं सत्त्वं मूलप्रकृतिः । तस्याश्च शक्तिद्वयं तमश्च रजश्च । तदुक्तम् शक्तिद्वयं हि मायाया विक्षेपावृतिरूपकम् । विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत्सृजेत् । अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः । आवृणोत्यपरा शक्तिः सा संसारस्य कारणमिति । एवं च लयविक्षेपात्मकयोस्तमोरजसोर्नाशहेतुः सत्त्वमेवेति मूलप्रकृतित्वं युज्यते । तदुक्तं—तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्यैश्च नाऽऽसीदस्ति भविष्यति । इति । सेयं विशुद्धसत्त्वप्रधाना माया यावत्पुरुषस्य भोगाय प्रवर्तते तावदावरणविक्षेपौ करोति । यदा चापवर्गाय प्रवर्तते तदा रजस्तमसी निर्धूय स्वयमपि तिरो भवति । सैव भगवती तयैव परमात्माऽपि भगवानित्याम्नायते । भगः शक्तिर्भगवान्काम ईश उभा दाताराविह सौभगानाम् । समधामौ समसत्त्वौ समौ तयोः समशक्तिरजरा विश्वयोनिरिति । ननु विशिष्टस्य जगत्कारणत्वे विशिष्टं शुद्धान्नातिरिच्यत इति नियमाच्छुद्धस्यापि जगत्कारणत्वं वाच्यम् । तथा च विकारित्वप्रसङ्गस्तदवस्थ एवेति चेन्न । इष्टापत्तेः । शुद्धत्वेनापि रूपेण मिथ्यात्वस्येष्टत्वात् । तर्हि कथं तत्सिद्धिरिति चेच्छुद्धं स्वप्रकाशमिति वाक्यस्याशुद्धत्वमस्वप्रकाशत्वव्यापकमित्येवं रीत्या निर्धर्मकत्वासिद्धेः । ननु तथाऽपि विशिष्टरूपे विशेषणस्यैव प्राधान्येन सांख्यमताविशेषो दुर्वारः । कुतः । प्रधानस्यैव विशेषणीभूतत्वात् । शिखी ध्वस्त इत्यादौ शिखायामेव ध्वंसप्रतियोगित्वादिति चेन्नैवम् । अस्ति हि विशिष्टशुद्धयोर्विशेषोऽभियुक्तस्वीकृतोऽन्यथा शुद्धकमलाभिप्रायेण नीलं कमलमित्यपि प्रयोगः । तस्मादसंमतोऽयं न्यायः । किंच विशिष्टस्यैव तत्र तत्र जगत्कारणत्वं श्रूयते । इन्द्रो मायाभिः पुरुरूप ईयते । मायिनं तु महेश्वरमित्यैवमादिषु । भवत्वेतत्प्रकृतमनुसरामः । असावुक्तलक्षणः परमात्मा रुद्रः सत्त्वविशिष्टप्रकृत्या समेतस्तदुत्थरजसा ताम्रो भवति । ततो भूतात्मिकया बभ्रुरित्येवं सुमङ्गलः परममङ्गलरूपो मङ्गलानां च मङ्गलस्मृतेः । ये च रुद्रा रुद्रशब्दवाच्या जीवा इमां भूमिमभितो दिक्षु श्रिताः सहस्रशोऽसंख्याता वाऽनिश्चय एषां हेडस्तीक्ष्णत्वमविद्यावृतत्वमीमहे । तत्त्वमस्याद्युपदेशैर्निवारयामः । जीवानामपि त्वदभिन्नत्वादित्यर्थः ॥ ७ ॥

तदेवं मायोपहितसाक्षिचैतन्यमीश्वरः स एवान्तःकरणविशिष्टः प्रमाता जीव एतदुभयानुपहितं शुद्धं चैतन्यं परमात्मा स एव च प्रमेयं वेदान्तानामिति स्थितम्। तत्र साक्षि चैतन्यमेकमनेकं वा। किं तावदनेकमेव भवितुमर्हति। कुतः। एकत्वे चैत्रानुगतस्य मैत्रस्याप्यनुसंधानप्रसङ्गादिति तन्न। केवलस्य तस्य ज्ञातृत्वायोगात्। यदि विनाऽप्यन्तःकरणं साक्षाज्जानीयात्तर्हि भवेदपि तदन्तःकरणानां तु प्रतिदेहं भेदमवोचाम। तस्मादन्तःकरणैक्यवादिष्वेव तदाक्षेपो नास्मासु। ननु तथाऽप्येकश्चेदेकमुक्तौ सर्वमुक्तिप्रसङ्गो दुर्वार इति चेन्नैवम्। अन्तःकरणोपाधिभेदोपगमेनैव तदुपपत्तेः। तथा हि। अन्तःकरणं तावद्वृत्तिकदम्बेन साक्षिणं व्याकुली करोति। तदपगमेन तदुपहितस्य मुक्तावपीतरस्य बन्धः संगच्छते सवित्रादिवत्। यथा सवित्रादिर्येन यत्राऽऽलोक्यते तेन तत्रास्तीत्यभिधीयते। परोऽभ्रापिहितमवेक्षमाणस्तं नेह सविता प्रकाशत इतिवदनुपलभ्यते। तथैकस्मिन्नपि साक्षिण्यन्तःकरणावच्छिन्नत्वेनोभयसंभव इत्यनवद्यम्। ननु साक्षिणो बन्धमोक्षातीतत्वात्तया नोपदेशोपयोगो मृषात्वान्न जीवस्येत्युभयतःस्पाशा रज्जुरिति चेन्न। अध्यारोपापोहोपयोगित्वेन साक्षिण एव तत्संभवात्। ननु प्रतिबिम्बस्यैव बन्धमोक्षावित्येके। साक्षिण एव कूटस्थस्येत्यपरे। किं श्रेयो ? नोभयमपि। तथा हि। न तावदाद्यः। यदाश्रयेणाविद्या तदाश्रयेणैव तयोर्बन्धमुचितत्वात्। प्रतिबिम्बस्य च तदनाश्रयत्वान्मिथ्यात्वाच्च। नच चेतनस्य प्रतिबिम्बोऽपि चेतनः सत्यश्चेति वाच्यम्। चेतनस्याप्यस्मदादेः प्रतिबिम्बे जडत्वदर्शनात्। अधिष्ठानानतिरेकेण सत्यत्वाङ्गीकारेऽस्मन्मतप्रवेशाच्च। नच साक्षिण एव ताविति द्वितीयः पक्षोऽपि। तस्याविद्यासाधकत्वेन बाधकत्वायोगात्। नहि यो यत्साधकस्तत्स्वयं बाधितुमुत्सहते। तद्यथाऽऽकाशं न स्वयमेवाभ्रं निरसितुमीष्टे किंतु वाय्वादिद्वारेणैव। तद्वत्साक्षी स्वयमविद्यासाधकत्वेन वर्तमानोऽप्यन्तःकरणवृत्तिद्वारा तां निरस्य स्वप्रकाशपरमानन्दरूपेण विराजत इत्यतः साधिष्ठानस्य बन्धमोक्षावित्यवधेयम्। ततश्चाऽऽकाशादिवदेकस्य सर्वगतस्यापि साक्षिणोऽन्तःकरणाध्यासेनोत्क्रान्तिगत्यागतयोऽपि संगच्छन्ते। तत्रोत्क्रान्तिकार उच्यते—

असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं
विश्वा भूतानि स दृष्टो मृडयाति नः॥ ८॥

अयमर्थः। देहव्ययसमये जीवो रुजापन्नतया परवशमालक्ष्य शरीरं मरणनिश्चयेनातिभीतो नाडीशैथिल्यावसरे बाह्यस्त्रीपुत्रादिदर्शनेन रुदन्परमव्याकुलतामुपगच्छति। ततश्चापानविलयेनोर्ध्वगतौ प्राणेष्वस्तमियासुषु स्तोत्रादिकरणेषु रजस्तमउद्रेकेण स्वप्नमालोकमान इव नानाविधानि नृपश्वादिशरीराणि पश्यति। ततो भाविजन्मभोगप्रदप्राक्तनेनोपस्थापितं यत्किमपि देहं बहु मन्यमान आश्लिषति। ततश्च प्राणादयोऽपि तमेवानुपतन्ते। दग्धेऽथो पूर्वदेहे दशमेऽह्नि पिण्डसांनिध्यमापन्नो वायसनिषेधेन स्वजनप्रार्थनमभिकाङ्क्षते। तदुत्तरं तदपि कलेवरं प्रातिभासिकमपहाय व्यावहारिकस्य तस्य लाभाय रेतोद्वारोदरमनुविशति जनन्याः। ततो गर्भवेदनामनुभूय पुनर्जायत इत्येष संसारपर्यावर्तः। योऽसौ साक्ष्यपसर्पति देहाद्देहमाटीकते तदा नीलग्रीवस्तमोगुणोद्रेकादावृतप्रकाशो रजसा च विलोहितः। गाव इन्द्रियाणि तत्पालका देवा एनमदृशन् दृष्टवन्तः। उतेत्यनेन देहोत्पत्त्यनन्तरमिति द्रष्टव्यम्। इन्द्रियाधिपतयो देवाः सशरीरमेव सन्तमुपयुञ्जते। उदशब्देन शमो लक्ष्यते। शीतलत्वात्तद्धार्यः। कामादिवृत्तयोऽप्येनमदृशन्। बाह्यविषयस्थापि साक्षिव्यापकत्वात्तत्र च कामादिवृत्तिप्रसरदर्शनात्। यद्वा द्रष्टारमप्येनं सशरीरं सन्तमुदहार्य उदकाहरणाय गताः स्त्रिय इत्यनेन दीनास्ता अप्यदृशन्। किं बहुना, उतापि च विश्वानि भूतानि यमपश्यन् स चैवंभूतो रुद्रो दृष्टः श्रवणमननादिभिः साक्षात्कृतो नोऽस्मान्मृडयाति सुखयति। तदनुभवं विनाऽन्यत्र निरुपाधिसुखासंभवादित्यर्थः॥ ८॥

नमो॑ अस्तु नील॑ग्रीवाय सहस्राक्षाय॑ मी॒ढुषे॑।

अथो॒ ये अ॑स्य॒ सत्त्वा॑नो॒ऽहं तेभ्यो॑ऽकर॒ं नम॑ः॥ ९॥

हे भगवन् नीलग्रीवाय नमः। प्रधानविक्षेपशक्त्यान्विताय वृत्तिप्रतिबिम्बितचैतन्यमक्षं सहस्रसंख्यान्यसंख्यातानि तानि यस्य तस्मै कामसेचको मीढ्वांस्तस्मै कर्मानुरूपफलदात्रे शिवाय तुभ्यं नमोऽस्तु। अथो येऽस्य सर्वसाक्षिणो रुद्रस्य सत्त्वानो भृत्या अंशा इति यावत्, तेभ्यो जीवेभ्योऽप्यहं नमोऽकरं नमस्करोमि॥ ९॥

ननु कोऽहं के चामी जीवा येभ्यो नमो विधीयत इत्यपेक्षायामविद्याविलासितावरणविक्षेपदोषनिबन्धनमेव जीवेशद्वैतमित्यतस्तन्निवृत्तिमाशास्ते—

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥ १० ॥

हे भगवन् त्वं प्रणवात्मकस्य मायामयस्य धन्वन उभयोरार्त्नियोः कोटचोरावरणविक्षेपयोर्ज्यामहंकाररूपां प्रमुञ्च । याश्च ते हस्त इषवस्त्वदधीना जीवास्तानपि परावप परित्यज । जीवभावमपहाय स्वरूपानन्देन विराजस्व ॥ १० ॥

अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ ११ ॥

हे सहस्राक्ष हे शतेषुधे । इषुधिशब्देन कर्माशयो लक्ष्यते । त्वमेव तद्धनुरवतत्यावरोपिताहंकाररज्जुकं कृत्वा शल्यानां वृत्तिविशेषाणां मुखा मुखानि निशीर्य न्यग्भावेन स्थापयित्वा नोऽस्माकं सुशिवः परमानन्दकरः सौमनस्योपेतो भव । उक्तार्थस्यैवायं भङ्ग्यन्तरेण प्रपञ्चः ॥ ११ ॥

नन्वविद्यासाधकस्य मम कुतस्तद्बाधकत्वमित्यपेक्षायामन्तःकरणवृत्तिद्वारा घटत इत्याशयेनाऽऽहुः—

विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ १२ ॥

कपर्दो वृत्तिचतुष्टयाश्रयमन्तःकरणं चतुष्कपर्देत्यादौ तथाव्याख्यानात् । तत्तादात्म्यापन्नः कपर्दी । तस्य तव धनुरुक्तलक्षणं विगतज्याकमस्तु । उत बाणवान् जीवनिमित्तं प्रधानं विशल्यं गतावरणविक्षेपमस्तु । अस्येषवः कामाद्या अनेशन्कार्याक्षमा भवन्तु । अस्य निषङ्गथिः कामाद्याश्रयमन्तःकरणमाभुरीषत्समर्थं बाधितानुवृत्त्या तिष्ठत्वित्यर्थः । यद्वा निषङ्गथिः खड्गः । शेषं समानम् ॥ १२ ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ १३ ॥

हे मीढुष्टम ते हस्ते या हेतिः कालरूपमस्त्रं यच्च धनुर्बभूव तेन च विश्वतः सर्वतस्त्वं परिभुज परिपालय । किं भूतया हेत्या । अयक्ष्मया दृढतरयेत्यर्थः ॥ १३ ॥

कालस्यैव सर्वजगत्प्रवर्तकत्वात्तमेवोरुधा स्तुवन्ति—

नमस्ते अस्त्वायुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥ १४ ॥

हे रुद्र ते तव धनुषि संधानाभावादनातताय धृष्णवे स्वरूपत एव प्रहर्तुं प्रगल्भायाऽऽयुधाय कालरूपाय नमोऽस्तु । तथा धन्वने प्रणवात्मकाय धनुर्बाणोपेताभ्यां ते बाहुभ्यां पूर्वोक्ताभ्यां नमोऽस्तु ॥ १४ ॥

न वयं त्वां संकटे पातयामः । संहरस्व वा शत्रून् भक्तांस्तु पालयेति प्रार्थयन्ते—

परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य इषुधिस्तवाऽऽरे अस्मन्निधेहि तम् ॥ १५ ॥

ते धन्वनो हेतिरस्मान्भक्तान् विश्वतः परिवृणक्तु वर्जयतु । अथो यस्तवेषुधिस्तमस्मत्त आरे दूरे तं निधेहि स्थापयेत्यर्थः ॥ १५ ॥

इति रुद्रभाष्ये प्रथमोऽनुवाकः ।

तदेवमाद्येऽनुवाके जगत्कारणस्याविकृतस्यैव परमात्मवस्तुनोऽविद्याहंकाराद्यध्यासेनैव संसारो न परमार्थत इत्युक्तम् । अथास्मिन्ननुवाके संसारस्वरूपमुच्यते । ननु संसारस्याऽऽविद्यकत्वेन मृषात्वात्किं तत्स्वरूपवर्णनेनेति चेन्न । उपास्त्यावुपयोगात् । ननु साऽपि मृषैवेति चेन्न । चित्तशुद्धिद्वारा ज्ञानहेतुत्वात् । स्वप्नादौ सूचकस्य मिथ्यात्वेऽपि सूच्यार्थस्य सत्यत्वदर्शनाद्वर्णादावपि ह्रस्वत्वदीर्घत्वादेः कल्पितत्वेऽपि चार्थप्रतिपत्तिहेतुत्वात् । ननु केयं देवता नाम का च तस्या उपास्तिः। न तावद्ब्रह्मणि सा संभवति । नामरूपातीतत्वात् । नामरूपानुसंधानपुरःसरा ह्युपास्तिरिति चेदुच्यते—ब्रह्मणो हि स्वस्वरूपभूतस्यानुभव एव नोपासना । न च तज्जलानिति शान्त उपासीतेति विरोध इति वाच्यम् । सगुणब्रह्मरूपत्वात्तस्य । द्वे ब्रह्मणी वेदितव्ये इत्यादिश्रुतेः । किंतु दिव्यविग्रहवती परात्मविभूतिरेव सा । तेन यद्यद्विभूतिमत्सत्त्वमिति स्मरणाद्रामकृष्णादेरपि देवतात्वसिद्धेः । नन्वेवं सामान्यस्यापि श्रीमत्त्वाद्युपालम्भात्कस्योपास्यत्वमथ कस्योपासकत्वमिति चेद्गुणोत्कर्षवत एव विभूतित्वेनोपास्यत्वमितरस्योपासकत्वमिति ब्रूमः । अत एव पुत्राणामपि यो भर्ता प्रकृतिः सा न मानुषीत्यादिवाक्यानि संगच्छन्ते । सा च द्वेधा व्यक्तविग्रहाऽव्यक्तविग्रहा चेति । तत्राऽऽद्या भूमावेवोपालभ्यते (राजादिः । अन्या तु दि-

वीन्द्रादिः । अव्यक्तविग्रहाणामपि पिशाचादीनामवैदिकत्वादनुपास्यत्वमेव । निरयहेतुत्वात् । इन्द्रादीनामिन्द्रो यातो वसितस्य राजाऽग्निर्मूर्धा दिवः ककुदित्यादिश्रुतिप्रणीतत्वादिष्टमेव तत् । अथैवं विभूतीनामपि सामान्यविशेषाभ्यामुत्कर्षनिकर्षावुपलभ्येते । यथाऽविशेषत्वेऽपि देवानामिन्द्रादिः श्रेयांस्ततोऽपि ब्रह्मविष्णुहरादय इत्युत्तरोत्तराधिक्यं तदुपासकानामपि भविष्यति । नन्वमीषां किमस्ति कृत्यमेकेनैव सर्वान्तर्यामिणा जगत्सर्गादिसिद्धेरिति चेन्न । अमात्यादिवत्तदुपयोगात् । तथाऽमात्यादी राजाज्ञयैव राष्ट्रकार्याण्यनुतिष्ठति न स्वत एव । एवं ब्रह्मादयोऽपि स्वान्तर्यामिप्रचोदितबुद्धिसंकल्पानुसारेणैव जगत्सर्जनादिव्यापारं संपादयन्ति । न स्वातन्त्र्यमनवस्थानात् । नच सृष्ट्यादौ तेषामस्ति स्वातन्त्र्यम् । तथात्वे स्वस्वभक्ताभिमानेन जगद्विप्लावयेयुः । तथा चामृतमृत्यू कस्य स्यातां न वा कस्येत्यनवस्थानादनैकमत्येनैकस्याप्यसिद्धेः । अकर्मजत्वं जातिसिद्धानाम् । किंच जन्मनैव सिद्धानामात्मज्ञानवतामणिमादिसिद्धिसंपन्नानां तेषां ब्रह्मविष्णुहराणां कर्मजन्यत्वं प्राणिकर्मानुसारेणैव तदाविर्भावसंभवाद् भेद एव प्रतिकल्पममीषां तत्स्मृतेः । प्रतिमहाकल्पं चैषां भेद एव न्याय्यः । कुतः । ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति स्मरणात् । उपलक्षणं चैतद्विष्णुहरावपि प्रमुच्येते इति बोध्यम् । उक्तं च वासिष्ठे—ब्रह्मणां कोटयो याताः प्रयाता हरिकोटयः । रुद्राणां कोटयो याताः केवाऽऽस्था मादृशे जने ॥ इति । तज्जत्वमितरेषां तद्दर्शनात् । कर्मजन्यत्वमेवेतरेषामिन्द्रादीनां तदर्थं शताश्वमेधादियागविधायकशास्त्रदर्शनात् । मन्त्रश्च—यो ब्रह्माणं विदधाति पूर्वमित्येवंजातीयको दर्शयति जन्यत्वं ब्रह्मादेः । अपि च नकुलादेरिव तेषामस्ति सृष्टिकर्तृत्वं संकल्पमात्रत्वात् । संकल्पश्चेदमिदानीं भूरि भूयादिदमुपक्षीयतामित्याकारकः । निमित्तमात्रत्वात्पित्रादिवत् । यथा वा पुत्रादिगर्भस्य निमित्तमात्रमेव मातापितरौ भवतस्तत्त्वन्यथैवोपचीयते तथा ब्रह्मादेरपि सृष्ट्यादिकं प्रति निमित्तमात्रत्वमित्यवधेयम् । अथैवमुपासनानां प्राचुर्येऽपि शक्त्युपासनायाः क्षिप्रफलसाधकत्वात्तत्पूजासाधनोपयोगित्वेन श्रीचक्रमुपदेष्टुं च प्रथमं बिन्दुचक्रमुच्यते । उपासना चेयं द्विविधा । बाह्या चान्तरा च । तत्राऽऽद्याऽतिदुष्करा विगीता च निरयहेतुत्वात्तदुक्तं परशुरामेण—आनन्दो ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् । तस्याभिव्यञ्जकाः पञ्च मकारास्तैरर्चनं गुप्त्या प्राकट्यान्निरयो भवतीति । मकारस्वरूपं च तत्तन्त्रे निर्णीतं तत्रैव

द्रष्टव्यम्। प्रत्युत सकामानां देवताक्षोभोऽपि जायत इत्याह श्रुतिः। सृण्येहवासितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान्। इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वयोनिरिति। क्वचिच्च देवतासाक्षात्कारवतामसावेवोपासना निखिलपुमर्थसंपादिनी जायते। दुर्लभश्चैवंभूत उपास्तिरसिकः। द्वितीया त्वन्तर्यागरूपा तत्प्रकारश्चेत्थम्। आधारचक्रस्थां भुजङ्गीरूपां कुण्डलिनीमृजुयोगकलयोत्थाप्य सूर्यकुण्डलिन्याऽऽहतचक्रस्थया सह संयोज्य तत आज्ञाचक्रवासिचन्द्रकुण्डलिनीं द्रावयित्वा तद्रसेन समुद्यद्भास्वरभास्करामनवद्यसौन्दर्यां नित्यतरुणीं पाशाङ्कुशधरां देवीं तर्पयान्विनिवेद्य तं स्वामी कुर्यात्। इदमाम्नातमरुणोपनिषदि—उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः। राज्ञः सोमस्य तृप्तासः सूर्येण सयुजोषसः॥ १॥ यत्कुमारी मन्द्रयते यद्योषिद्यत्पतिव्रता। अरिष्टं यत्किंच क्रियते अग्निस्तदनुविध्यति॥ २॥ हे भारताः सरस्वत्युपासका भरतखण्डवासिनो वा उत्तिष्ठत मा स्वप्त मा शयनं कुरुत। अग्निं स्वाधिष्ठानगताग्निकुण्डलिनीमिच्छध्वमिच्छादण्डेनोत्थापयध्वम्। ततः सयुजा संयुक्तेन सूर्येण तन्नामकुण्डलिन्या उषसो दग्धस्य द्रुतस्येति यावत्। राज्ञः सोमस्य रसेन तृप्तासो भवत। तथा कुमारी सुप्तोत्थिताग्निकुण्डलिनी ज्ञानयोगाधायकत्वात्कुमारीत्युच्यते। कुं महामायाभूमिं मारयतीत्यर्थात्। इच्छाशक्तिरूपा कुमारीति शिवसूत्राच्च। मन्द्रयते मन्द्रस्वनं कुरुते। सा च योषिद् बुद्धिरूपेण पतिं कामेश्वरं परशिवं व्रतयति भुङ्क्त इत्यर्थात्पतिव्रता विद्याशक्त्यर्थं किंचिदरिष्टं शुभं क्रियते तयेति योज्यम्। अग्निस्तदनुविध्यति साधयतीति श्रुत्यर्थः। श्रुत्यन्तरेऽप्येतन्निर्णीतं 'चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम॥ १॥ लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु॥ २॥ इत्यत्र गुप्तं यथा स्यात्तथा चरतीति चरणं कुण्डलिनीत्रयमर्चिज्योतिष्मन्महस्वादिति वह्निसूर्यचन्द्रतेजसामुपलक्षणम्। पावकस्यार्चिषा भानोस्तेजसा महसा विधोः। गुप्ताचारा कुण्डलिनीत्यादिना शुकसंहितायामुपबृंहणदर्शनात्। शेषं समानम्। तेन प्रथममकारः संपद्यते। मन एव चञ्चलत्वाद्द्वितीयमकारतुल्यं तदर्पणं च मनोनाशेनोन्मन्यवस्थासंपत्तिः। बाह्यविषयव्यापणं नाम तदनासक्तिस्ततस्तृतीयो निज-

बुद्धेः प्रेयसीस्थानीयत्वेन तत्तादात्म्यभावनं चतुर्थः । तन्मात्राण्येव पञ्चम इत्येवं पञ्चप्रकारैः परदेवतायजनात्कैवल्यमेव फलमित्याहुः । इदं च योगिनां स्वत एव जायते । तच्च पूज्यपूजाधिष्ठानमन्तरा न भवतीत्यत आह—

नमो हिरण्यबाहवे सेनान्ये

दिशां च पतये नमः ॥ १ ॥

हिरण्यशब्देन प्राथमिकः शुक्लबिन्दुरुच्यते । रजतꣳ हिरण्यमिति श्रुत्यन्तरात् । स च सकलजगदुपादानतया बाहुस्थानीयः सहायो यस्य तेन विना जगत्कर्तृत्वानुपपत्तेः । इदमत्र रहस्यं यथा कश्चित्सम्राड् दिव्यविग्रह आदर्शे स्ववदनमालोक्य प्रमोदनुगच्छति तथा परमेश्वरोऽपि स्वाश्रितमायाशक्तौ दर्पणस्थानीयायां स्वप्रातिबिम्बं समीक्ष्य तेन रूपेण बिन्दुस्वरूपतामयते । प्रकृतिश्च चिद्भासिका स्वगतरजस्तमसी आविष्करोति । ततश्च साभासास्त्रयो बिन्दवः प्रभवन्ति सोमसूर्यवह्निनामभिः । ततश्च ज्ञानेच्छाक्रियाशक्तिस्वरूपं बिन्दुत्रयं मिलित्वा बिन्दुचक्रमुपदिशन्ति तच्च सत्त्वप्राधान्याद्धिरण्मयमुच्यते । किंच स्थूलसूक्ष्मकारणत्वात्सर्वान्तरत्वमप्यस्याह श्रुतिः। अष्टाचक्रा नवद्वारा देवतानां पूरयोध्या तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः । तस्मिन्हिरण्मये कोशे त्र्यक्षरे त्रिप्रतिष्ठिते । अस्ति यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुरिति । इदमेव बिन्दुत्रयं केचित्कामकलास्वरूपमाहुः । तथा हि—सोमबिन्दुर्मुखं रव्यग्निबिन्दू द्वौ स्तनौ । समष्टिरेषां हार्दकलेति वस्तुतो देहेऽपि त्रय एवावयवाः शिरआदिघण्टिकान्तस्तदादिस्तनान्तः परः । उदरादिजघनान्तस्तृतीयः पाणिपादं तु तच्छाखा इति । आम्नायते च महोपनिषदि—द्वामण्डला द्वास्तना बिम्बमेकं मुखं चाथ गुहा त्रीणि सदनानि कामी कलं काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्य इति । तथा च सर्वशक्त्याश्रयबिन्दुचक्रोपहितः परमात्मा सर्वसाक्षी सर्वेश्वर इत्युच्यते । इदमेव संप्रज्ञातावस्थायामपरोक्षी कुर्वन्तो योगिनः परमानन्दमनुभवन्ति । नन्वतीन्द्रियत्वात्कथमपरोक्षमिति चेन्न । प्रकाशबहुलतया धीदृश्यत्वात् । तदुक्तं दक्षिणामूर्तिस्तोत्रप्रबन्धे—तनूनपात्तडित्तारातारेशतपनोपमम् । ब्रह्मनाडीगते प्राणे बिन्दुरूपं प्रकाशते । इति । सेनान्य इति । सेना चात्र शक्तीनां समूहस्तं नयति कालरूपेणेतस्ततश्चालयतीति सेनानीः । यश्च शक्तिसमूहश्चरमवृत्तौ सकलसंशयासंभवादिदोषनिरासकतया प्रादुर्भवति । तथा च शिवसूत्रम् । शक्तिचक्रानुसंधाने विश्वसंहार

इति। पुनः किंभूताय। हिरण्यबाहवे। दिशां च पतये नम इति। अत्र दिक्शब्देन चत्वारो वेदा उच्यन्ते। तथा च श्रुतिः। ऋचां प्राची महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची साम्ना मुदीची महती दिगुच्यत इति। तत्पालकाय नमो नम इति द्विर्वचनमादरज्ञापनार्थम् ॥१॥

क्रमप्राप्तं त्रिकोणचक्रमुद्देष्टुं द्वितीयं यजुराह—

नमो॑ वृक्षेभ्यो॒ हरि॑केशेभ्यः

पशूनां पत॑ये॒ नमः॑ ॥ २ ॥

वृश्च्यन्त इति वृक्षाः। कार्योपाधित्वादिच्छाज्ञानरुपौ द्वौ क्रियारूपश्चैक इत्येवं त्रयः कोणास्तद्रूपेभ्यः शिवेभ्यो नमः। व्यष्ट्यभिप्रायेण बहुवचनम्। तानेव विशिनष्टि—हरिकेशेभ्य इति। महत्तत्त्वस्य रजस्तमउपबृंहितत्वेन तद्वृत्तिभूतत्रिकोणानामपि हरिकेशत्वं केशशब्देन वृत्तिरुच्यते। नम इति द्विर्वचनं पूर्ववदेवैवमग्रेऽपि द्रष्टव्यम्। पशूनां पतये नम इति समष्ट्यभिप्रायेणैकवचनम् ॥ २ ॥

वसुकोणचक्रमाह—

नमः॑ स॒स्पिञ्ज॑राय॒ त्विषी॑मते

पथीनां पत॑ये॒ नमः॑ ॥ ३ ॥

अत्रान्धतामिस्रतामिस्रमहामोहमोहतमःसंज्ञाः पञ्चाविद्यावृत्तयः। कालकर्मस्वभावास्त्रय इत्येवं वसवोऽष्टौ कोणा यस्य तद्वसुकोणं तस्मै। किंभूताय। त्विषीमते कान्तिमते सस्शब्दो बालतृणवाची। तद्वत्पिञ्जराय इडा पिङ्गला सुषुम्ना चेति त्रयः पन्थानः। तत्र दक्षिणोत्तरावाद्यौ सद्योमुक्तिरूपश्चैक इत्येवं शास्त्रप्रसिद्धास्तेषां पतये तन्नियमनद्वारेण तत्स्वामिने। इदं चाहंकाररूपं तद्रूपाय शिवायेति पूर्ववत् ॥ ३ ॥

दशारयुग्ममुद्देष्टुं पूर्वमन्तर्दशारमाह—

नमो॑ बभ्लुशाय॑ विव्याधिनेऽन्ना॑नां

पत॑ये॒ नमः॑ ॥ ४ ॥

सूक्ष्मतन्मात्राणि सूक्ष्मभूतानि चेति दश आरा यस्य तस्मै। विद्याकामधेनुपतिः परमधर्मस्वरूपः शिवोऽत्र बभ्रुशब्देनोच्यते। तस्मिन्बध्यस्तत्रैव शेते तिष्ठ-

तीति बभ्लुशस्तस्मै । रसयोः सावर्ण्यात् । विभ्याधिनेऽन्तःकरणोत्पादनद्वारा छलकाय । अद्यन्त इत्यन्नानि स्थूलविषयास्तेषां पतिस्तत्कारणत्वात्तद्रूपाय नमोऽस्तु ॥ ४ ॥

अथ बहिर्दशारमाह—

नमो॒ हरि॑केशायोपवी॒तिने॑

पु॒ष्टानां॒ पत॑ये॒ नम॑: ॥ ५ ॥

तद्धि स्थूलभूततन्मात्ररूपं तेन च विराडुच्यते । स च हरिकेशः । हरितो मेघाः केशस्थानीया यस्य भुजंगीस्वरूपा कुण्डलिनीशक्तिरुपवीतं यस्य पुष्टानां सत्यादीनां पतये तस्मै नमो नमः ॥ ५ ॥

मन्वस्रमाह—

नमो॑ भ॒वस्य॑ हे॒त्यै

जग॑तां॒ पत॑ये॒ नम॑: ॥ ६ ॥

तच्च ज्ञानकर्मेन्द्रियदशकं मनोबुद्ध्यहंकारचित्तानीति चतुर्दशानि यस्य तादृशं तच्चैवमुच्यते—भवस्य संसारस्य हेतिरस्त्रं तस्मै । अन्तर्वृत्त्यैवाविद्यातत्कार्यनिवृत्तेः । जगतां जंगमानां पतये तेनैव तद्व्यवहारदर्शनात् तद्रूपाय शिवाय नम इति ॥६॥

हृदयपुण्डरीकमेव नागदलं तदाह—

नमो॑ रु॒द्रायाऽऽत॒तावि॒ने

क्षेत्रा॑णां॒ पत॑ये॒ नम॑: ॥ ७ ॥

परस्याऽऽत्मनो व्यापकत्वेऽपि हृदयमेवाभिव्यक्तिहेतुरतस्तत्रत्याय रुद्राय परमात्मने नमोऽस्तु । किंभूताय । आततेन विस्तारिनेन धनुषाऽवति रक्षति तस्मै क्षेत्राणां सर्वप्राणिशरीराणां पतये समष्टिरूपत्वात्तस्म ॥ ७ ॥

षोडशदलमाह—

नम॑: सू॒तायाह॑न्त्याय॒ वना॑नां॒ पत॑ये॒ नम॑: ॥ ८ ॥

शतं चैका हृदयस्य नाड्य इतिश्रुतिप्रणीतानां षोडश मुख्या नाड्यस्तन्मयाय सूताय देहाधारत्वात्सहायाय यावज्जीवमहन्त्याय वनानां विषयाणां पतये तद्रूपाय शिवाय नमः ॥ ८ ॥

ततो वृत्तत्रयमाह—

नमो रोहिताय स्थपतये

वृक्षाणां पतये नमः ॥ ९ ॥

कामकलारूपध्याने हि बिन्द्वादिमन्वस्त्रान्तचक्रमेव मुखं नागदलषोडशदले कुचौ भूपुरमेव हार्दकला तदेतदवयवत्रयमेव वृत्तत्रयमिति केषांचिदस्ति मतं तच्चैवमुच्यते रोहिताय रजोवशिष्ट्याद्रक्ताय स्थपतये स्थिराय वृक्षाणां देहादीनां पतये आधाराय ॥ ९ ॥

भूपुरमाह—

नमो मन्त्रिणे वाणिजाय

कक्षाणां पतये नमः ॥ १० ॥

मन्त्रिणे जगत्कार्ये सहायत्वाद्वणिज इन्द्रियाणि तत्पतित्वाद्वाणिजाय कक्षाणामुत्तरोत्तराभिव्यक्तदशविधध्वनीनां पतये तन्मूलत्वात् ॥ १० ॥

अथैवमुपदिष्टचक्रप्रपञ्चोपहितत्वेन परमात्मनो जगत्कर्तृत्वादिकं तथा ‘ देशकालानवच्छिन्नं तदूर्ध्वं परमं महः ’ इत्यादि व्यवहाराच्च तदनुपहितत्वं शुद्धत्वं चोपदेष्टुं कानिचिद्यजूंष्याह—

नमो भुवन्तये वारिवस्कृतायौषधीनां

पतये नमः ॥ ११ ॥

नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां

पतये नमः ॥ १२ ॥

नमः कृत्स्नवीताय धावते

सत्त्वनां पतये नमः ॥ १३ ॥

तत्र भुवं विश्वं तनोति इति भुवन्तिस्तस्मै । अत एव वरिवो द्रव्यं कर्मानुरूपसत्फलमिति यावत् । तस्य कर्ता वरिवस्कृत्स एव वारिवस्कृतस्तस्मै सोमरूपेणौषधीनां पतये नमः । धर्मोऽयमधर्मोऽयमित्युच्चैर्घोषो यस्य तस्मै वेदरूपायेत्यर्थः । तद्विरुद्धमाचरतः पुरुषानाक्रन्दयति दुःखदानेन रोदयतीति तस्मै । इन्द्रियाश्वानामभिमानवन्तः पत्तयस्तेषां पतये जीवेशरूपेण कृत्स्नं जगद्वीतं व्याप्तं येन तस्मै ॥ ११ ॥ १२ ॥ १३ ॥

नन्वीश्वरस्य सतः कथं जीवत्वं तस्मिन्सति वा कथमीश्वरत्वमेकस्य विरुद्धधर्मायोगात्तुहिनदहनवत्तस्माद्भेद एव न्याय्य इति चेन्न । श्रुतिस्मृतियुक्तिविरोधेन तदनङ्गीकारात् । उपपत्तिरन्यथाऽपि भविष्यति । तथा हि । अरूपमस्पर्शमगन्धवच्च तदित्यादिश्रुतिभ्यः कामरूपाकारविकारादिविधुर आत्मेति तावत्सर्वोपनिषत्प्रसिद्धम् । माया तु त्रिगुणात्मिका दृश्यते स्पर्शयोग्या । तथा च कथमनयोः संबन्ध इति । प्रतिबिम्बद्वारक इति चेन्न । अमूर्तस्य प्रतिबिम्बासंभवात् । मूर्तस्य वस्तुनो हि निसर्गनिर्मलवार्यादौ प्रतिबिम्ब उपलभ्यते । न च नीरूपस्यापि जपारूपादेः स्फटिकादौ तदुपलम्भ इति वाच्यम् । युक्तिमात्रत्वात् । तत्र हि रक्तरूपस्य दृश्यत्वादात्मनस्तदयोगात् । एतेन शब्दस्यापि प्रतिबिम्बोऽस्ति प्रतिशब्दाख्य इत्यपास्तम् । श्रावणत्वात्परस्य तदसंभवात् । न च तर्हि श्रोतव्य इत्यादेः का गतिरिति वाच्यम् । अशब्दमित्यनेनैव निराकृतत्वात् । आत्मेति हि शब्दमात्रं श्रोत्रेण श्रूयते नापरोक्षी क्रियते । तदविषयत्वात् । न च वार्यादौ नीरूपमप्याकाशं प्रतिसंक्रामति । कथमन्यथा जानुमात्रे जलेऽप्यतिगम्भीरताप्रतीतिः स्यादिति वाच्यम् । तत्र सावित्रादिप्रकाशोज्ज्वलितस्यैव तस्य प्रतिबिम्बदर्शनात् । प्रकृते च तद्विरोधात् । तस्मान्नाऽऽत्मप्रतिबिम्बवादो युक्तिसह इति चेद्वाढम् । न वयं सोरादेरिवाऽऽत्मज्योतिषः प्रतिबिम्बभङ्गी कुर्महे येनायं दोष उद्भाव्यते । किंतु चिदात्मनो वृत्त्यादावभिव्यक्तिरेव प्रतिबिम्बोऽग्न्यादिवद्यथा सर्वगतस्याप्यग्नेः काष्ठादावेवाभिव्यक्तिस्तथा ब्रह्मणोऽपि । तद्यथा घट आकाशपूर्ण एवोत्पद्यते तथा वृत्तिरपि साभासैव समुत्पद्यते न पुनः प्रवेशो व्यापकत्वव्याघातप्रसङ्गात् । तत्सृष्ट्वा तदेवानुप्राविशदित्यादावन्यथा व्याख्यातत्वाच्च । ननु जीव ईश्वरश्चेत्कथं सार्वज्ञ्यं नानुभूयते सत्यसंकल्पत्वादिकं वेति चेन्न । संस्कारपारोक्ष्येण तदनुपलम्भात् । परोक्षाः खल्विमे संस्कारा नानाजातीया नापरोक्षीकर्तुं शक्या धर्माधर्मवत् । यथा धर्माधर्मौ नापरोक्षी क्रियेते अतीन्द्रियत्वात्तथा संस्कारा अपि । किंतु प्रकृतिप्रकाशकतया वर्तमानः साक्षी सर्वेश्वरोऽपि तदुत्थलिङ्गशरीराध्यासेनानीश इवाऽऽस्ते व्यावहारिकजीववत् । यथा वा शब्दादिबाह्यविषयकज्ञानवतः सर्वज्ञकल्पस्य जाग्रज्जीवस्य स्वाप्नजीवाध्यासेनानीशत्वादि तद्वत् । साक्षी चैक एव प्रत्यगात्मा तदुपाधेरेकरूपत्वात्तदाश्रितकार्योपादानकोटौ संस्काराणामप्रवेशात्तद्भेदे तदभेदस्येष्टत्वात् । यद्यप्यावरणभेदेन तत्प्रतिबिम्बाः प्राज्ञात्मानो भिद्यन्ते तथाऽपि बिम्बस्था-

नीयः साक्षी न भिद्यते सर्वगतत्वात् । आवरणं च न भाति नास्ति कूटस्थो मामहं न जानामीत्याकारकवृत्तिविशेष इत्यवोचाम । तादृग्वृत्तिकूटाभिव्यक्तचैतन्येन जीवशब्दवाच्येन सर्वात्मनि साक्षिण्यारोप्यते खल्वयं जीवभावस्तत्र चाभिमानवृत्तिरेव रज्जुस्थानीया बध्नाति कामधेनुवृषभस्थानीयौ शिवापरमेश्वरौ लौकिकशकटादिवत् । यथा वा लोकप्रसिद्धस्य शकटस्याचेतनस्य स्वतो गत्यभावेऽपि रज्जुनिबद्धवृषभादिना चेतनेन सोपपद्यते तथा समष्टिबुद्धितदीश्वराभ्यामूह्यते किलायमचेतनो देहशकटः । यन्निबन्धनमिदं साक्षित्वं सैषा समष्टिबुद्धिर्यथैवेत्यवोचाम पुरस्तात् । ननु तर्हि सुप्तावपेतजीवभावो जीवः स्यात्तदानीमन्तःकरणलयेन साक्ष्यपोदयादिति चेन्न । सुखमहमस्वाप्समिति परामर्शानुरोधेन वृत्तित्रयस्य तदानीमप्यङ्गीकारात् । ननु च यदि तत्र वृत्तित्रयमस्ति तर्हि कुतो नोपलभ्यत इति चेन्न । सूक्ष्मतमत्वेनेति प्रागेवोक्तत्वात् । सूक्ष्मो ह्यहंकारो लयमेष्यन्सूक्ष्मतरा भवति तदा महानुच्यते । लीनः सन्सूक्ष्मतमो भवति तदा समष्टिबुद्धिरित्युच्यते । अयुष्याश्च विशिष्टरूपाद्या विशेषणीभूतास्तिस्रो वृत्तयस्तदानीमानन्दमनुभवन्ति । ताश्च सुखाहंकारावस्थाज्ञानाकारास्तिस्रो वृत्तय इति गौडपादाचार्यसूत्रेणोपपादिताः । सेयं सुषुप्त्यवस्थोक्तसमष्टिबुद्धेश्च पुनः सूक्ष्मतरादिरूपतानापत्तिर्विदेहमुक्तिरित्याहुः । ननु प्रमाता नाम वृत्तिप्रतिबिम्बो वा बिम्बस्थानीयः साक्षी वा । नाऽऽद्यः । तस्य परिणामित्वेन स्वविकारसाक्षित्वानुपपत्तेः । नापि द्वितीयः । तस्य ज्ञातृत्वे सत्यानन्त्यानुपपत्तेः । किंच संयुक्तः सन्साक्षी जानीयान्न ह्येतदस्ति । असङ्गो ह्ययं पुरुष इति श्रुतेः । अत्रोच्यते—द्वेधा ह्यन्तःकरणं भवति । धर्मिरूपं धर्मरूपं चेति । तत्राहमाकारका विशिष्टवृत्तिर्धर्मी तदवच्छिन्नः प्रत्यगात्मैव प्रमाता । नान्योऽतोऽस्ति ज्ञाता श्रोता मन्तेत्यादिश्रुत्यन्तरात् । न च पूर्वोक्तदोषः केवलविशिष्टरूपाभ्यां तदुपपत्तेः । न चासङ्गोऽयमिति श्रुतिविरोधः प्रकाश्यप्रकाशकत्वसंबन्धस्य तत्राप्यङ्गीकारात् । अधिष्ठानाध्यस्तत्वं वा संबन्धोऽस्ति । अत एव शुद्धोऽप्यसौ प्रत्ययानुपश्य इति पातञ्जलिरसङ्गस्यापि ज्ञातृत्वमाह । सा च विशिष्टरूपेणेत्यत्यस्मन्मते विशेषः । अन्यास्तु धर्मभूताः सामान्यवृत्तयः सन्ति शतशो मनआदिशब्दवाच्याः । याभिराकुलीकृतः साक्षी संसारीवावभासतेऽविवेकिनाम् । ननु प्रमाणवृत्त्या यदि प्रमाता जानाति तर्हि किमस्ति कृत्यं साक्षिणा येनायमतिरिक्तः स्वीक्रियत इति चेदुच्यते । न तावत्साक्षिप्रमात्रोरत्यन्तभेदमुपगच्छामः । किंत्व-

हमस्मीत्याकारकधीरेव तद्व्यपदेशहेतुः । तथा हि । चिन्मात्रपूर्णवस्त्वाश्रितं जडप्रधानं नाम बीजशक्तिः । सा तु प्रथमं महत्तत्त्वाभिधामादायाऽऽविर्भवति । ततो भहिरहंरूपेण ततोऽपि बहिर्मनआदिरूपेणेति प्रक्रिया । तत्र मनआद्यसंकोचेन पूर्णोऽस्मीति प्रत्ययो महत्तत्त्वं तदवच्छिन्नचैतन्यं साक्षिशब्दवाच्यं तत्संकोचेनाहमिति प्रत्ययावच्छिन्नं चैतन्यं प्रमातृशब्देनाभिधीयते । वस्तुतस्तु तदुभयोरपि तेन तेन रूपेण मिथ्यात्वादनवच्छिन्नं शुद्धचैतन्यमेव प्रमेयमिति प्रागेवावोचाम । ननु स्वप्नमनोराज्यादौ प्रतीयमानप्रातीतिकजीवदेवतादीनां प्रमाणवृत्तिरस्ति वा न वा । किं तावत्प्राप्तम् । अस्तीति । कुतः । स्वप्नादौ शुभाशुभसूचकत्वस्यान्यथानुपपत्तेरिति । तन्न । मानाभावात् । तथा सति जीववदीशस्यापि बाह्यविषयोपलम्भाद्भोगः प्रसज्येत । ततश्चाविशेषादनश्नन्नन्यो अभिचाकशीतीति श्रुतिविरोधप्रसङ्गाच्च । इदं तु बोध्यम् । शक्तिद्वयवदेकस्य नित्यशुद्धबुद्धमुक्तस्वभावस्याऽऽत्मनः सकलस्थूलसूक्ष्मप्रपञ्चस्योत्पादकत्वेऽपि तदनुभवः प्रमाणवृत्त्यभावोत्किंतु प्रमातृरूपेण तस्यैवास्त्यनुभवस्तत्तत्त्वात् । प्रमातृरूपस्य स्वरूपमेव स न ततो भिन्नस्तत्त्वमस्यादिश्रुतिभ्यः । ततश्च परलोकयातायातक्षमेन बुद्धिसत्त्वाभासेनावच्छिन्नः परात्मा स्वतस्तदक्षमोऽपि शयालोर्जीवस्य दूरदेशयातायातवदनुयातीव प्रतीयते न न परमार्थतः । सर्वगतत्वेन तदसंभवात् । तस्यामेव च प्रमाणवृत्तौ स्थूलसूक्ष्मप्रपञ्चभोगनैराश्येनाऽऽत्मपरायणायां निष्प्रत्यूहमविद्यातत्कार्यनिवृत्तिरिति ॥

इति रुद्रभाष्ये द्वितीयोऽनुवाकः २ ॥

---

द्वितीयेऽनुवाके बिन्द्वादिचक्रप्रपञ्चारोपेण साक्षिणः सर्वात्मकत्वमुक्तमिदानीं तस्यैव प्रमातृरूपेण संसारितामाह—

**नमः॑ सह॑मानाय निव्या॒धिने॑**

**आव्या॒धिनी॑नां॒ पत॑ये॒ नमः॑ ॥ १ ॥**

प्राक्तनोपस्थापितदुःखादिकं सहत इति तस्मै । संशयविपर्यासादिवृत्तीः प्रमाणवृत्त्या नितरां ध्यायतीति निव्याधी तस्मै । आसमन्ताद्विध्यन्ति विवेकजन्यज्ञानमित्याव्याधिन्यः संशयादिवृत्तयस्तासां पतये साक्षिरूपेण तत्प्रकाशकाय तादृशाय रुद्राय नमो नमः ॥ १ ॥

नमः ककुभाय निषङ्गिणे स्तेनानां
पतये नमः ॥ २ ॥

ज्ञडवर्गप्रकाशकत्वात्ककुभाय श्रेष्ठाय । निषङ्ग इषुधिः कर्माशयस्तद्वते । स्तेनाः कामादयस्तत्प्रकाशकाय नमः ॥ २ ॥

नमो निषङ्गिणं इषुधिमते
तस्कराणां पतये नमः ॥ ३ ।

नितरां सङ्गी निषङ्गी तस्मै । अत एव पद्कारा निषङ्गिण इति नि सङ्गिन इत्याहुः । इषुधिमते मायावते । तस्करा गुप्तचोराः परोक्षस्मृतिसंस्कारादयस्तत्पतये नमो नमः ॥ ३ ॥

नमो वञ्चते परिवञ्चते
स्तायूनां पतये नमः ॥ ४ ॥

स्वप्नादौ जाग्रत्प्रपञ्चं वञ्चते सुषुप्त्यादौ तदुभयमपि परिवञ्चते सुषुप्तिकालीनान्तःकरणसूक्ष्मावस्थारूपा वर्णविशेषास्तायवस्तेषां पतये प्राज्ञरूपाय रुद्राय नमः ॥ ४ ॥

नमो निचेरवे परिचरायारण्यानां पतये नमः ॥ ५ ॥

नितरां चरणशीलं मनस्तद्रूपाय परितश्चरणशीलोऽहंकारः परिचरस्तद्रूपस्तस्मै । अरण्यवद्दुःखावहे संसारे वर्तमाना विषया आरण्यास्तत्पालकाय नमः ॥ ५ ॥

नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः ॥ ६ ॥

सृकाः छुरिका दुर्वासनास्तद्वद्भ्यो जिघांसद्भ्योऽपस्मारादिभ्यो मुष्णद्भ्यो विवेकज्ञानापहारिभ्यस्तद्रूपेभ्यो नमः ॥ ६ ॥

नमोऽसिमद्भ्यो नक्तं चरद्भ्यः
प्रकृन्तानां पतये नमः ॥ ७ ॥

असिमन्त इव वीर्यवन्तो ये ह्यविद्यारात्रौ संचरमाणाः क्षणलवादिकालविशेषास्ते च जीतानामायुराच्छिद्य प्रकृन्ता विनाशकास्तद्रूपेभ्यो नमः ॥ ७ ॥

नम॑ उष्णी॒षिणे॑ गिरिच॒राय॑

कुलु॒ञ्चानां॒ पत॑ये॒ नमः॑ ॥ ८ ॥

उष्णीषिण उष्णीषवदावरकलिङ्गशरीराभिमानिने गिरिवद्दुरारोहं कर्ममार्गमाचक्षते तस्मिंश्चरत्यभिनिवेशेन वर्तत इति गिरिचरः । अत एव देवादीनां स्थानापहारित्वेन कुलुञ्चानां पतये नमः ॥ ८ ॥

एवं लिङ्गशरीरप्रयुक्तं जीवस्य संसारित्वं भोगाय तत्तल्लोकायातायातक्षमत्वं चाभिधाय प्रसङ्गाल्लिङ्गप्रवर्तकं देवताविशेषं चोपदिशति । तत्र वाक्पाणिपादपायूपस्थाख्यकर्मेन्द्रियाणां क्रमादग्नीन्द्रोपेन्द्रमृत्युप्रजापतिदेवतास्तासामाद्यामाह—

नम॒ इषु॑मद्भ्यो धन्वा॒विभ्य॑श्च

वो॒ नमः॑ ॥ ९ ॥

इषवोऽत्र वाचः । कोपप्रसादौ धनुःस्थानीयौ । कोपपूर्विका हि रुशती वाक् । तद्विपरीता प्रसादपूर्विका । तदुक्तम्—कोपप्रसादधनुषो वाक्शरा मुनयः क्वचित् । शपन्ते चानुगृह्णन्ति तस्मान्नैतान्प्रकोपयेदिति । ततश्च वाग्रूपेषुमन्तः कोपप्रसादधन्वयुक्ताश्चाग्नयो भवन्ति । तदधिष्ठातृत्वात् । तेभ्यो नमोऽस्तु । रुद्रांशत्वात् । अत्र सर्वत्र बहुवचनं जीवबाहुल्याभिप्रायेण ज्ञातव्यम् ॥ ९ ॥

पाणीन्द्रियदेवतामाह

नम॑ आत॒न्वाने॑भ्यः प्रति॒दधा॑नेभ्यश्च

वो॒ नमः॑ ॥ १० ॥

आतन्वते विचित्रशिल्पानीत्यातन्वानाः प्रतिदधते भोग्यवस्तूनीति प्रतिदधानाः पाणयो भवन्ति तदधिष्ठातृभ्य इन्द्ररूपरुद्रेभ्यो नमः ॥ १० ॥

नम॑ आ॒यच्छ॑द्भ्यो वि॒सृजद्भ्य॑श्च

वो॒ नमः॑ ॥ ११ ॥

आयच्छन्ति संचयन्ति विसृजन्ति प्रसारयन्ति पादास्तादृशा उपेन्द्रास्तद्रूपेभ्यो वो नमः ॥ ११ ॥

उपस्थेन्द्रियदेवतामाह -

नमोऽस्यद्भ्यो विध्यद्भ्यश्च
वो नमः ॥ १२ ॥

अत्रासनं च वेधनं चोपस्थेन्द्रियकर्म प्रसिद्धम् । यस्यामुशन्तः प्रहराम शेफामिति श्रुतेः ॥ १२ ॥

पायुदेवतामाह—

नम आसीनेभ्यः शयानेभ्य
वो नमः ॥ १३ ॥

इहाप्यासनं शयनं च पाय्विन्द्रियमवष्टभ्यैव भवतीति तत्कर्तृमृत्युरूपेभ्यो वो नमः ॥ १३ ॥

चक्षुर्देवतामाह—

नमः स्वपद्भ्यो जाग्रद्भ्यश्च
वो नमः ॥ १४ ॥

स्वपनं जाग्रच्चोन्मेषनिमेषाभ्यां चक्षुर्धर्मः प्रसिद्धस्तत्कर्तृसूर्यरूपेभ्यो नमः ॥ १४ ॥

श्रोत्रदेवतामाह—

नमस्तिष्ठद्भ्यो धावद्भ्यश्च
वो नमः ॥ १५ ॥

श्रोत्रेन्द्रियं हि संनिहितं शब्दं स्वाधिष्ठाने स्थित्वैव शृणोति । दूरस्थं तु दूरे गत्वैव । दूरे शब्द इति प्रत्ययात् । ततश्च तदधिष्ठातृदिग्रूपदेवता अपि तिष्ठन्त्यो धावन्त्यश्च भवन्ति । तद्रूपेभ्यो वो रुद्रेभ्यो नमः ॥ १५ ॥

त्वगिन्द्रियदेवानाह—

नमः सभाभ्यः सभापतिभ्यश्च
वो नमः ॥ १६ ॥

सभारूपः खल्वयं देहो यत्राहंकार एव कर्ता राजा मनोमात्य इन्द्रियपरिवारः शब्दादिविषयान्भुञ्जानो हृदयसिंहासनमधिरूढो बुद्धिनर्तक्या नृत्यगीतादि

वीक्षन्निव लक्ष्यते । तस्य च सभारूपदेहस्य त्वगिन्द्रियमावरणं पालयितृ चेति सभासभापतिशब्दाभ्यामुच्यते । ततश्च तदधिष्ठातृवायुदेवतारूपेभ्यो वो नमः ॥ १६ ॥

रसनेन्द्रियदेवानाह–

नमो अश्वेभ्योऽश्वपतिभ्यश्च
वो नमः ॥ ७ ॥

दुर्यम्यं किल रसनेन्द्रियमश्वादिवत्समस्तज्ञानेन्द्रियाणाम् । तदुक्तम्–जितं सर्वं जिते रस इति । तथा च तादृक्षस्वरूपेभ्यो वो रुद्रेभ्यो नमः । अत्र देवतेन्द्रिययोरभेदोक्तिर्नियन्तृनियम्यभावाभिप्रायेण ज्ञेया ॥ १७ ॥

इति रुद्रभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थस्तत्राऽऽदौ घ्राणेन्द्रियदेवतामाह–

नम आव्याधिनीभ्यो विविध्यन्ती-
भ्यश्च वो नमः ॥ १ ॥

आसमन्ताद्विध्यन्ति आव्याधीनि विविधं विध्यन्तीति विव्याधीनि च भवन्ति । कुतः । मृगमदादिपदार्थानां करपृष्ठादौ संघर्षणेनैवावघ्राणदर्शनात् । तादर्थ्येन तत्रोपचाराच्च । ततस्तत्कर्तृकदेवतारूपेभ्यो वो नमः ॥ १ ॥

मनोहंकारबुद्धिचित्तानामन्तःकरणवृत्तीनां मध्ये प्रथमं बुद्धिदेवतामाह–

नम उगणाभ्यस्तृꣳहतीभ्यश्च
वो नमः ॥ २ ॥

निश्चयरूपादिबुद्धिवृत्तयः संशयादिदोषपरिपान्थित्वेनोत्कृष्टास्तीव्राश्च । अतस्तादृक्स्वरूपरुद्रमूर्तयोऽपि उगणा उत्कृष्टगुणरूपास्तृꣳहतयस्तीव्राश्च भवन्ति ताभ्यो नमः ॥ २ ॥

मनोदेवतामाह–

नमो गृत्सेभ्यो गृत्सपतिभ्यश्च
वो नमः ॥ ३ ॥

मनो हि नानाविधविषयकामुकावादृगृत्समित्युच्यते। देवतारूपरुद्रमूर्तयोऽपि तथोच्यन्ते। गृत्सेभ्यो गृत्सपतिभ्यश्च वो नम इति॥ ३॥

अहंकारदेवतामाह—

नमो व्रातेभ्यो व्रातपतिभ्यश्च

वो नमः॥ ४॥

अहंकाराधीनः खल्वयं वृत्तिसमूहस्ततश्च वृत्तिव्रातरूपेभ्यस्तत्पतिभ्यश्च नमः॥ ४॥

नमो गणेभ्यो गणपतिभ्यश्च

वो नमः॥ ५॥

एवमनुसंधानरूपस्य चित्तस्यापि शमदमादिनानावृत्तयो गणशब्देन निगद्यन्ते। ततस्तादृशेभ्यो नमः॥ ५॥

एवमन्तःकरणधर्मभूतवृत्तीनामिन्द्रियाणां च देवताः समभावा उपदिश्य धर्मिभूतस्य तस्य तद्समाहितक्षेत्रज्ञ एव देवतेत्याशयेनाऽऽह—

नमो विरूपेभ्यो विश्वरूपेभ्यश्च

वो नमः॥ ६॥

एकमेव हि शुद्धमनन्तचैतन्यं तत्तदन्तःकरणोपहितत्वेन साक्षिशब्दवाच्यम्। तदेव च तस्मिन्प्रतिबिम्बितत्वेन क्षेत्रज्ञशब्देन व्यवह्रियते। तत्र साक्षिशब्दवाच्यस्य व्योमादिवदेकत्वेऽपि प्रतिबिम्बितस्य तस्य भवति वैविध्यमुपाधिवैविध्यात्। ते तु क्षेत्रज्ञाः परमार्थतो विरूपा रूपरहिताः। व्यवहारतस्तु विश्वरूपा जडतादात्म्यापन्नत्वाज्जडरूपास्तद्रूपेभ्यो वो ममः॥ ६॥

नमो महद्भ्यः क्षुल्लकेभ्यश्च

वो नमः॥ ७॥

अचिन्त्यप्रभावः खल्वयं साक्षी यतस्तत्तदुपाधितादात्म्येन महांश्च क्षुल्लकश्च भवति॥ ७॥

नैतावदेव किंतु नियन्तृनियम्यरूपेणापि व्यवहरति विस्मापयन्निवाऽऽह—

नमो रथिभ्योऽरथेभ्यश्च

वो नमः॥ ८॥

देहाश्चैते रथरूपकत्वेन श्रुतावुक्ताः । तदारूढाः क्षेत्रज्ञा रथिन इत्युच्यन्ते आत्मानं रथिनं विद्धीत्यादौ । ततश्च तदनन्यत्वमारम्भणशब्दादिभ्य इति सर्वात्मा भगवान्रुद्रोऽपि क्षेत्रक्षेत्रज्ञस्वरूपत्वेनाभिधीयते ॥ ८ ॥

एवं जीवरूपतामभिधाय साक्षिणस्तस्यैवेश्वररूपत्वमाह—

नमो॒ रथे॑भ्यो॒ रथ॑पतिभ्यश्च

वो॒ नमः॑ ॥ ९ ॥

देहरूपरथास्तच्छक्तिकार्यत्वेन तद्रूपा एव तेषां पतयस्त एव साक्षिणः । बहुवचनं तूपाधिनानात्वादित्युक्तम् । न हीशसमुपेक्षितं क्षणमात्रमपि स्थातुमीष्ट इति ॥ ९ ॥

अथेदमाशङ्क्यते—याः खल्विमा इन्द्रियदेवता अभ्युदितास्ताः किं तत्तल्लोकवासिन्यः सिद्धिवशादत्रापि संवसन्ति न वा नव्या एव काश्चनोत्पद्यन्ते । अधिष्ठानसमकालीना एव वा । अदृष्टानुसारादागमापायिन्योऽविद्यापरिणामविशेषा वेति । किं तावत्प्राप्तम् । प्रथमपक्ष एव युज्यते । कुतः । जातित एव सिद्धिसंपन्नानां तासां बहुभवनस्य प्रसिद्धत्वादिन्द्रियेष्वपि सूक्ष्मरूपेणावस्थानं संभवति । तथा चोक्तं यदि नियतविग्रहा काचिद्देवता स्यात्तर्ह्येकस्य यजमानस्य यज्ञे हविरादातुं गतायास्तस्या यज्ञान्तरे गमनं न स्यात् । न हि नियतविग्रहो मनुष्यादिरेकत्र भोक्तुं गतोऽन्यत्रापि गन्तुमीष्टे । तस्मादनियतविग्रहैव देवता भवितुमर्हति । नानाविधत्वानुपपत्तेश्चैवं । किं च नियतविग्रहत्व एकस्यैव चतुर्भुजत्वादिशरीरविशिष्टस्य रुद्रादेर्दशभुजत्वपञ्चमुखत्वादिनानारूपत्वानुपपत्तेः । यदि तु त्रिनत्रैकमुखचतुर्भुजरुद्रमूर्त्यपेक्षया पञ्चमुखत्वादिविशिष्टमूर्तयो भिन्ना इत्युच्यते तदाऽपि पूर्वोक्तनानाविधत्वानुपपत्तिस्तद्वस्थैवेत्यदोषः । एवं सिद्धिवशात्सिद्धे देवतानां वैविध्ये स्यात्तथा । ननु यदा योगी बहून्कायान्निर्मिमीते तदा ते किं समनस्काः प्रत्युत निर्मनस्का इति । नोत्तरः । प्रवृत्त्यनुपपत्तेः । आद्येऽपि किं निर्मातृपृथगभिप्रायवच्चित्तयुक्ता न वा तद्विपरीताः । नाऽऽद्यः । अनुभवसिद्धनियन्तृनियम्यभावानुपपत्तेः । यदि योगिपृथगभिप्रायचित्तयुक्तास्ते निर्मितदेहा स्युर्न नियम्येरन् निर्मातृयोगिमनसा । तस्मान्निजमनोभिप्रायानुरोधीनि मनांसि संजनयति । इयं चास्मितामात्रसमाधिमनुसंदधतः सिद्धिरुपतिष्ठत इत्युक्तं पतञ्जलिना । निर्माणचितान्यस्मिता-

माबादिति । ततश्च तत्तल्लोकवासिसूर्यादिदेवताः सिद्धिवशादिन्द्रियाण्यप्याविशन्तीति चेन्न । अनुपपत्त्यैव तदनङ्गीकारात् । तथा हि । चतुरशीतिलक्षसंख्ययोनयः प्रत्येकमनन्ताः खल्विमे जीवास्तत्तदिन्द्रियेषु स्थितानां स्वीयनिर्मितदेहानामनुसंधातृत्वे देवतानां नानेश्वरत्वसिद्ध्यापत्तेः । इष्टापत्तावेकेश्वरनिर्णायकश्रुतिस्मृतिविरोधात् । श्रुतयश्चैवम् । द्यावाभूमी जनयन्देव एकः । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । एकः सन्बहुधा विचारः । एक एव हि भूतात्मा । एको देवः सर्वभूतेषु गूढः । एकं सन्तं बहुधा कल्पयन्तीत्याद्याः । स्मृतयश्च—सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । ईश्वरः सर्वभूतानामित्येवमादयः। किंच न हि सूर्यादिषु विद्यमानेषु कस्यचिच्चक्षुष्मत्ता कस्यचिदन्धत्वं वा न युज्यते । अपि च योगी यावन्निर्माणदेहानुसंधाता न तावदव्यग्रो भवति । दृष्टं चैतत्कृष्णादिषु । न हि कृष्णादिरेकः सन्षोडशसहस्रसुन्दरीभोगाय यावद्बहुरूपो भवति न तावदव्याकुलः । कुतः । अनुसंधानरूपोपाधेरनपायात् । तदेवं सति स्थानिदेवतानां कदाऽपि निराकुलत्वं न स्यात् । किंच यद्यंशतस्तत्तदिन्द्रियेषु स्थित्वा निरुक्तदेवताः कर्मसु जीवान्प्रवर्तयन्ति तदा जीवानां पराधीनतया स्वतः कर्तृत्वायोगान्मा भूत्तत्तत्कर्मफलभोगः । भूयाच्च तत्प्रवर्तकदेवतानां प्रधानकर्तृत्वात्। तस्मान्नाऽऽद्यः पक्षो युज्यत इति । द्वितीयेऽपि किं प्रतिक्षणमुत्पद्यन्ते प्रत्यहं वा । प्रथम आद्यक्षणोत्पन्नदेवतायां द्वितीयक्षणे ध्वंसस्तृतीयक्षणे पुनरन्यदेवतोत्पत्तिरिति यदि मतं तर्हि द्वितीयक्षणे करणप्रवृत्तिर्न स्यात् । प्रवर्तकदेवतायास्तदानीमनुत्पन्नत्वात् । यदि पुनरव्यवधानेनैव परोत्पत्तिस्तदा परस्यां प्राथमिकदेवतायाः प्रवर्तकादिशक्तयोऽप्युत्पन्द्यत इति वाच्यमिति गौरवं स्यात् । न चेदं फलमुखत्वाददोषायेति वाच्यम् । प्रतिक्षणं देवताभेदे क्षणानन्त्येन देवतानन्त्यकल्पनागौरवस्य फलमुखस्य दुष्परिहारत्वात् । अतो न द्वितीयः । निरुक्तदोषसंवलितत्वात् । न च प्रागुक्तविकल्पानां तृतीयोऽपि । कुतः । यावद्बन्धकोटिजीवानां तासामपि बन्धदर्शनेन मोक्षदशायां च तथा तन्मोक्षदर्शनेन जीवत्वाविशेषादनुपास्यत्वापत्तेः । न च यावदधिकारमवस्थितिरधिकारिणामिति न्यायेन यावज्जीवदशं तादिन्द्रियावस्थितावपि न तासां जीवत्वं नित्यमुक्तत्वादिति वाच्यम् । तत्तदिन्द्रियाभिमानवतां नित्यमुक्तत्वासंभवात् । यदि च व्यवहारतस्तथात्वेऽपि परमार्थतोऽभिमानशून्यतया नित्यमुक्ता इत्यापाद्यते तर्हि तथाविधेनैकेन नित्यमुक्तसर्वान्तरगतपरमात्मनैव सर्व-

शक्तिना तत्तत्प्रकाशकत्वोपपत्तौ किं गौरवग्रस्तेन बहुदेवताकल्पनेनेति संक्षेपः। ततश्चादृष्टानुसारादागमापायिन्योऽविद्यापरिणामविशेषरूपा एव देवता इत्येव ज्यायः । तेन च कर्मानुरूपेशितुर्मायोपाधेर्नित्यमुक्तपरमात्मन एव तत्तत्करणेषु तत्तद्देवतारूपेण भावनं विधेयम् । ततश्च क्वचिज्जीवेष बधिरान्धत्वादिकमप्यदृष्टदुर्विलासादेवेत्यवगन्तव्यम् । इत्थं चाविद्याविजृम्भितप्रपञ्चवञ्चकपरमागवर्तिनी परब्रह्माभिधाना काचिदेकैव देवता सकलकरणप्रवर्तिक ऽनुग्रहतदभावाभ्यां विद्यमानस्वरूपेव प्रहीणेष्ववभावयितृभावनानुसारिणी समस्तजनहृदयान्तरबहिर्मार्गयोरप्येकरूपैवोपलक्ष्यत इति निष्कर्षः ।

एवं प्रपञ्चानुभवकालीनास्थितिमुक्त्वा जीवन्मुक्तिकालिकां स्थितिं वक्तुमुपक्रमते —सेनाभ्यः सेनानीभ्य इत्यादितोऽनुवाकसमाप्तिपर्यन्तम् —

नमः सेनाभ्यः सेनानिभ्यश्च
वो नमः ॥ १० ॥

अयमर्थः—“ तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ” इति श्रुत्युपदेशाद्गुरूपसत्तिपूर्वकं ततो लब्धतत्त्वमस्यादिवाक्योपदेशस्य ब्रह्मत्वं विजिज्ञासोर्यतमानस्य योगिनस्तार्तीयभूमिकाजयोपक्रमेऽसंभावनादिदोषवृन्दपरिपन्थिन्यः संभवन्ति विवेकवृत्तयस्ता एवेह सेनाशब्देन निरुच्यन्ते । यदाह भगवाञ्छिवः— —विवेको भैरवः शक्तिचक्रोपसंहारे विश्वसंहार इति च । अनयोश्चायमर्थः । विवेको नाम द्रष्टृदृश्यविभेदविमर्शः । स एव सर्वतो भरितत्वाद्भैरव इत्याबिद्यते । आकाशादिदेवताश्च मायाशक्तयस्तासां चक्रं नाम कामक्रोधादिवृत्तिसैन्यं तदुपसंहारे ब्रह्मैकतानतापत्ययेन बाधे सति भवति विश्वस्य सर्वस्य संहारो बाधः । असंप्रज्ञाते हि दृश्यं न स्फुरति सुप्ताविवेति विद्वदनुभवसिद्धम् । इयांस्तु विशेषः सुषुप्तादसंप्रज्ञातसमाधेश्चित्तलयाभाव इति । तल्लयो हीतरत्र । तदुक्तं लीयते हि सुषुप्तौ तन्निगृहीतं न लीयत इति । ननु शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्येतरोपाधिनिवृत्तिरुदयते स्वस्याप्युपाधित्वाविशेषादित्यादावखण्डवस्त्वाकारा खल्वेकैव वृत्तिरापाद्यते तत्कथमुक्तं वृत्तयः संभवन्ति । इति चेत्सत्यम् । यद्यपि वस्तुन एकत्वादेकैव तद्विषया वृत्तिर्वक्तुमुचिता तथाऽपि प्रत्यवस्वरूपावरकत्वेन समुद्भवन्तीनां नानाविधतत्तत्संशयवृत्तिपिशाचीनां निरासाय ब्रह्मविद्यात्म-

कचरमवृत्तेरेव शक्तिभूताः समुत्तिष्ठन्ति प्रमाणवृत्तिदेभ्यः । ननु सकृच्छ्रवणमात्रेणैव कस्यचिदसंदिग्धा वृत्तिरुदयते । तत्र नाऽऽभिः किमपि कृत्यमिति चेदिष्टापत्तिरिति ब्रूमः। यथा विधिनिषेधात्मकशास्त्रस्य कृतार्थं प्रति वैयर्थ्येऽप्यकृतार्थं प्रति साफल्यमिति । ननु निर्विकल्पसमाधौ विकल्पशब्दवाच्या वृत्तिरस्ति वा न वा । आद्ये व्याघातः । द्वितीये पुनरुत्थानानापत्तिः । इष्टापत्तौ नाभुक्तं क्षीयते कर्मेति स्मृतिविरोधप्रसक्तेः । ब्रह्मज्ञस्य हि संचितक्रियमाणकर्मक्षयाश्लेषयोरपि देहारम्भकस्य नाप्ययः। तथा च सूत्रं -तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति । अत्रोच्यते । सन्ति हि समाधावपि सूक्ष्मवृत्तयस्तदानीमनुपलभ्यमाना अप्युत्थानदशास्वनुमीयन्ते । एतावन्तं कालं समाहितोऽभूवमिति परामर्शदर्शनात् । नापि व्याघातः । वृत्त्यनुपलम्भमात्रस्य निर्विकल्पशब्देन विवक्षितत्वात् । ततश्चैवंभूतवृत्तिरूपसेनानियन्तृत्वेन प्रकाशकत्वेन वर्तमानाः सेनान्यस्तेभ्यो नमः ॥१०॥

अथोक्तासंप्रज्ञातसमाधेः प्राग्भाविसंप्रज्ञातसमाधिवैशारद्यविजृम्भितसिद्धिविशेषविशिष्टयोगिनः परमपुरुषाद् भ्रश्यन्तीत्याशयेनाऽऽह—

नमः॑ क्षत्तृभ्यः॑ संग्रही॒तृभ्य॑श्च

वो॒ नमः॑ ॥ ११ ॥

अयमर्थः—ये हि पारमार्थिकीं सिद्धिमपहाय काश्चिदन्या एव सिद्धीः संगृह्णते संगृहीतारस्ते तु क्षत्ता ग्रामचण्डालस्तद्वद्विगीता इति तादृशानामपि परमार्थतः शिवरूपतया नमस्करणं संगच्छते ॥ ११ ॥

नम॒स्तक्ष॑भ्यो रथका॒रेभ्य॑श्च

वो॒ नमः॑ ॥ १२ ॥

किंच यथा खलु तक्षाणः काष्ठकुट्टका रथादीन्कुर्वन्ति तद्वत्सकामयोगिनो देहरूपरथं दिव्यरूपेण परिणामयन्ति । प्रसिद्धं हि योगिपुरीषादेरपि दिव्यगन्धत्वम् ॥ १२ ॥

नमः॒ कुला॑लेभ्यः क॒र्मारे॑भ्यश्च

वो॒ नमः॑ ॥ १३ ॥

अपि च कुलालादीनां सामग्रीबलाद्घटादिनिर्मातृत्वमेवं मनोमात्रसामग्रीवतो

योगिनोऽपि नानाविधदेहनिर्मातृत्वं भूतसूक्ष्माश्लिष्टं मनोमात्रमेव ह्युपादानीकृत्य बहुरूपा भवन्ति योगवन्तः । तथा च शिवसूत्रं—शक्त्यनुसंधाने शरीरोत्पत्तिरिति । शक्तयश्चात्र भूतसूक्ष्माणि । तासामनुसंधानं नाम संस्कारवता मनसा तादात्म्यभावनं तस्मिन्सति शरीराणां दिव्याङ्गनादिरूपाणामसंकल्पितानां वा यथाभिलषितशरीराणामुत्पत्तिर्भवतीति सूत्रार्थः । अत एव स एकधा भवति द्विधा भवतीत्याद्याः श्रुतयः संकल्पिताभिलाषितनानाविधशरीरोत्पत्तिं दर्शयन्ति । असंकल्पितानामप्युत्पत्तिं पतञ्जलिरवादीत् । स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गादित्यादिना । अस्यार्थः । स्थानानि येषां सन्ति ते स्थानिनो योगविभ्रंशकरा देवताविशेषास्तैरुपनिमन्त्रण आह्वाने कृते सति सङ्गस्मययोरकरणं तत्सङ्गे वा गर्वो वा न कर्तव्य इति । इदमत्रावधेयम् । योगमभ्यस्यतः पुरुषस्य हि यदा बुद्धिसत्त्ववैशारद्यं जायते तदा तदसहमानाः स्थानिदेवता आविर्भूय प्रार्थयन्ते । तद्यथा—भो आयुष्मन्निदमारुह्यतां देवयानं त्वरितमागम्यतां सकलसंनिकेतं नाकलोकमिमा रामाः सुभगाः सुषेयमिदममृतममी कल्पद्रुवस्तदेतत्सर्वमुपभुज्यतामिति । ततस्तत्सङ्गे तु योगभ्रंश इति स परिहर्तव्यः । यतश्चेमा देवता आविर्भवन्ति यादृग्रूपा वा तदनुपदमेव वक्ष्यामः । तथा च निरुक्तदेवतासङ्गादिकर्तारः कर्मारास्तादृग्भ्यो रुद्रेभ्यो नमः ॥ १३ ॥

नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च

वो नमः ॥ १४ ॥

पुञ्जीभूय तिष्ठन्तीति पुञ्जिष्टाः । जीवन्मुक्ता हि क्वचिद्व्युत्थानसमये वृत्तिकदम्बकेनापि समन्वयन्ति क्वचिच्च तूष्णीमेव निषीदन्तीति निषादास्तेभ्यो नमः ॥ १४ ॥

नम इषुकृद्भ्यो धन्वकृद्भ्यश्च

वो नमः ॥ १५ ॥

समाध्यादौ साक्षिमात्रस्वरूपा अपि व्युत्थानदशायां स्वाभासेन इषून्व्यावहारिकजीवा धन्वानि कालात्मकानि प्रागुक्तानि च कुर्वते । व्यवहारदशासु व्यावहारिकजीवतादात्म्येन कालाद्यधीना इव तिष्ठन्तीति तेभ्यो नमः ॥ १५ ॥

नमो मृगयुभ्यः श्वनिभ्यश्च

वो नमः ॥ १६ ॥

मृगयवो व्याधास्त इव बहिः क्रूरस्वरूपा अन्तः शीतला इति स्व( श्व )नि-शब्देनोच्यन्ते ॥ १६ ॥

नमः श्वभ्यः श्वपतिभ्यश्च

वो नमः ॥ १७ ॥

चत्वारः पादाः पुच्छमेकमित्येवं पञ्चवृत्तिकोऽहं ममेति कर्णद्वयवती कामक-र्मादिकलुषस्वभावा खल्वियमविद्यारूपैव यवितुमर्हतीत्यविद्यापरपर्यायाण्यज्ञानानि श्वशब्देनोच्यन्ते । तत्प्रकाशकाः साक्षिणः श्वपतयस्तद्रूपेभ्यो रुद्रेभ्यो नमः॥१७॥

इति रुद्रभाष्ये चतुर्थोऽनुवाकः ॥ ४ ॥

---

चतुर्थादिष्वनुवाकेषु बहुवचनस्वारस्येन प्रतिदेहं प्रमातृचैतन्याद्भिन्ना एव सा-क्षिण इत्याशङ्कां तूष्णीकुर्वन्नेक एव साक्षी न तद्भेद इत्याशयेनाऽऽह नमो भवाय चेत्यादिना--

नमो भवाय च रुद्राय च ॥ १ ॥

ननु महाशिल्पिभिरपि दुर्निर्माणस्यास्य जगतः कौशलं कस्य बुद्धौ स्फुरति । कीदृक्स्वरूपा च सा बुद्धिर्यया खलु ब्रह्मादितृणपर्यन्ता अमी जीवा नियम्यन्ते । कस्मिश्च विज्ञाते कैवल्यसंपदाविर्भवति । को वदृशो देव इत्युच्यते--नम इति । स्वतः स्फुरत्परमात्मैव हि देवः । एको देवः सर्वभूतेषु गूढ इति श्रुतेः । स एव सर्वस्वरूपो भवतीति भावः । तथा च श्रुतिः---आत्मा वा इदमग्र आसीत्युप-क्रम्य स एवाऽऽत्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवदिति । अस्यार्थः । इदं जगत्पुराऽऽत्मैवाऽऽसीत् । तद्भिन्नसत्ताकत्वाभावात् । ततः स देव आत्मानं द्वेधाऽपातयत् । द्विधा चकार । ततस्तेन कारणेन पतिश्च पत्नी चेति व्यवहारास्प-दोऽभूदिति । विचित्रशक्तेरात्मनः सकाशात्पृथङ् नैवास्ति माया नागरयाशयः । तदेवं सति विशुद्धसत्त्वप्रधाना शक्तिर्माया प्रकाशकत्वेन वर्तमान आत्मैव देव इत्युक्तं भवति । तादृश्याश्च मायाया भ्रमप्रमाविलक्षणा काचिदस्ति निर्विकल्पिका

वृत्तिः । तस्यामेव हि जगन्निर्माणकौशलं स्फुरति । तथैव नियम्यन्ते खल्विमे जीवा । नन्वेवंभूता सर्वज्ञबुद्धिरस्ति तर्हि प्रमातृबुद्धिमत्कुतो नोपलभ्यते साक्षिणेति चेत् । भ्रमप्रमाविलक्षणत्वादेव नोपलभ्यत इति ब्रूमः । यथा वा सुषुप्तौ सुखाद्याव-रकवृत्तीनां तिसृणां सत्त्वेऽपि नोपलम्भ उभयविलक्षणत्वात्तथेयमपि । किंतु सुप्तो-त्थितपरामर्शानुरोधेन ता यथाऽनुमीयन्ते तद्वदिहापि जगत्कार्यानुमेयत्वममुष्याः । नन्वेवं सति प्रमोपादानं भ्रमोपादानं तदुभयविलक्षणज्ञानोपादानं भिन्नमेव स्यादिति चेत्को नेत्याह । तथा हि–द्वे हि मायाशक्ती विक्षेप आवरणं चेति तत्राऽऽद्या लिङ्गादिब्रह्माण्डान्तं जगज्जनयति तत्र यल्लिङ्गशरीरं तदेव प्रमोपादानम् । यत्तु मलिनसत्त्वप्रधानमावरणमविद्याशब्दवाच्यं तदेव तु भ्रमोपादानम् । इदं च सुषुप्तौ भ्रमप्रमावैलक्षण्येनानुभूयत इति मायातो न भिद्यते । तृतीयस्योपादानं तु मायैवेति प्रागुक्तम् । तत्र लिङ्गशरीरमावरणं चेति द्वयमसंभेदेन स्थितं सज्जीवोपाधिः । इदं च जागरादौ बाध्यबाधकभावेन तिष्ठति । सुप्तौ तमपहाय तूष्णीमेवावतिष्ठत इति । यच्च पुनर्भ्रमप्रमाविलक्षणवृत्त्युपादानभूता माया पारमेश्वरोपाधिः सा न केवलं जगन्मात्रोत्पत्त्यादेर्हेतुरपि तु जीवोपाधेरपीति जगत इव तस्यापि तन्नियम्य-त्वम् । ननु जडायाः कथं जगन्नियन्तृत्वमिति चेन्न । तत्रापि चिदाभासाङ्गीका रात् । तदेव शक्तिद्वयवदज्ञानस्य विशेषणोपाध्युपलक्षणत्वेन चैतन्यस्यापि भवति त्रैविध्यम् । तत्र विशेषणत्वं नाम विशेषणवृत्तिधर्माश्रयत्वे सति साक्षाद्व्यावर्तक-त्वम् । यथा घटादौ नीलादेः । तेनाज्ञानविशिष्टा चिज्जीव इत्युक्तं भवति । उपा-धित्वं च विशेष्यवृत्तिधर्माश्रयत्वे सति साक्षाद्व्यावर्तकत्वम् । यथा श्रोत्रादौ कर्ण-शुष्कुल्यादेः। तेनोपहिता चिदीश्वर इति सिध्यति । उपलक्षणत्वं च विशेष्यवृत्तिधर्मा-श्रयत्वे सति परम्परया व्यावर्तकत्वम् । यथा चन्द्रादौ शाखादेः । ततश्चाज्ञा-नोपलक्षिता चित्साक्षिभूता तमेव भान्तमनुभाति सर्वमित्यादिश्रुतिप्रसिद्धा । इयमेव तत्तदुपाधिप्रतिबिम्बित्वेन विभिन्नयोर्जीवेशयोस्तत्त्वंपदवाच्यार्थयोः पारमार्थिकस्व-रूपभूतेति वेदान्तैः प्रमीयत इत्यवधेयम् । अथैवंभूतसाक्षिण एकत्वेन सर्वसाधार-णतया प्रतीयमानत्वेन ममायं साक्षीति तत्तदभिमानविषयतया च जीवसाक्षीशसा-क्षीति व्यवहारः क्वचिद्वेदान्तेषु न वस्तुतः । असङ्गाद्वितीयस्य तस्य भेदकोपाधे-रेव खपुष्पायितत्वात् । चन्द्रादिवच्च । यथा वा बालानां ममैवोपरि चन्द्रो मया साकं पलायत इति व्यवहारेऽपि न वास्तवमेव चन्द्रः पलायते न वैकस्मिन्नेव

देशे वसतीति । कुतः । सर्वत्र सर्वेषां प्रकाशकत्वेन भासमानत्वात् । तद्वद्देशकालानवच्छिन्नपरज्योतीरूपः साक्षी सर्वत्र सर्वेषामात्मीयत्वेन प्रतीयते । तदुक्तं—व्याप्तेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् । दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशीति । न च वैषम्यम् । प्रतीतिमात्रे तदुदाहृतेः । न चायं विषमो दृष्टान्त इति वाच्यम् । कुतः । द्वादशसहस्रयोजनपरिमाणश्चन्द्रो न खलु सर्वदेशव्यापक इति वक्तुं शक्यते । किंत्वेकदेश एव । अनावृतस्थितिकत्वेन सर्वैः सर्वत्रोपलभ्यते । नक्षत्रादिवत् । यथा वा तदपेक्षयाऽल्पपरिमाणानां नक्षत्रादीनामनावृतत्वेन सर्वत्रोपलम्भ इत्येतावदेव । न ह्येवमात्मा । तस्य सर्वगतत्वश्रवणात् । मैवम् । प्रतीतिमात्रेण तदुदाहृतेरिति सर्वत्र प्रतीयत इत्येतन्मात्रस्य दृष्टान्तत्वेन विवक्षितत्वान्न दोष इत्यर्थः । तदेवं न भाति नास्ति कूटस्थ इत्याद्यवरणरूपभ्रमस्य तद्विपरीतप्रत्ययात्मकप्रमायाश्च जीव एवोपलम्भाद्बन्धमोक्षादिव्यवस्थाऽपि तत्रैव नेश्वरे। तत्र तदुभयप्रत्ययादर्शनात् । कथं तर्हि जगत्सर्जनादिकर्तृत्वमिति चेदुच्यते । दोषप्रयुक्तभानविषयत्वं प्रातीतिकस्य व्यावहारिकस्य वा जगतो लक्षणम् । तत्र स्वप्नगतप्रातीतिकजगत उपादानं दोषो निद्रारूपः। तत्प्रयुक्तभानविषयत्वस्य तत्र सत्त्वात् । ननु स्वप्नसृष्टिः किमीशकल्पिता जीवकल्पिता वा । किं तावत्प्राप्तमीशकल्पितेति । कुतः । य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण इत्यादिश्रुतिषु तथा दर्शनात् । किंच—यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने । अथ पुरुषं कृष्णं कृष्णदन्तं पश्यति स एवैनं हन्तीत्येवमादिभाविशुभाशुभसूचकस्य सर्वज्ञेश्वरमन्तराऽनुपपत्तेः । न हि जीवस्य भविष्यज्ज्ञानमस्ति । अपि च क्वचिदप्लुतं व्याघ्रोऽप्येनं भीषयति पिशाचादिश्च । न हीदं जीवकर्तृकत्वे संभवति । एवं मन्त्रोपदेशोऽपि तत्र प्रतीयते । यदाहुः । नृसिंहार्कवराहाणां प्रासादश्रवणस्य च स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च पार्वति । वैदिकेषु च सर्वेषु सिद्धादन्निव शोधयेत् ॥ इति । न हीदं शास्त्रशरीरमीश्वरं विना संगच्छते । तस्मादीश्वर एव भूतभवद्भविष्यज्जीवकर्मसंस्कारश्रयप्रकृतिप्रवर्तकत्वेन वर्तमानस्वप्नप्रपञ्चनिर्मातुमीष्ट इति चेन्न । यत्रैष स्वप्नया चरति, इत्युपक्रम्य स्वे शरीरे यथाकामं परिवर्तत इति श्रुतिः । नेत्रे जागरणं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत् । इत्यपि श्रुतिः शरीरान्तरे स्वाप्नपदार्थोत्पत्तिं दर्शयति । किंच न तत्र रथा न रथयोगाः पन्थानो वा भवन्ति । अथ रथान्रथयोगान्पथः सृजति

स हि तस्य कर्तेति श्रुतिर्जीवकर्तृकमेव तं दर्शयति । न च पूर्वोक्तानुपपत्तिः, । सोपपत्तिकत्वात् । तथा हि । द्वये खल्वमी संस्कारा इष्टप्रदा अनिष्टप्रदाश्च । तत्र विहितकर्मजन्या इष्टास्तद्विपरीता अनिष्टाः । ते च सर्वे जीवोपाधावन्तःकरण एव तिष्ठन्ति । कुतः । जीवस्यैव कर्मकर्तृत्वश्रवणात् । ततश्च स्वानुष्ठीयमानपापपुण्यात्मककर्मणां संस्काररूपेणावस्थितानां कालान्तरे तस्यैव भोक्तृत्वश्रवणाच्च । न च तर्हि ईश्वरस्यान्यथासिद्धत्वं स्यादिति वाच्यम् । संस्कारोद्बोधककालशक्तिप्रवर्तकत्वेन तस्यान्यथासिद्धत्वात् । कालस्तु मायैवेत्यन्यत् । यदि तत्संस्कारनियन्त्री कालशक्तिर्न स्यात्तर्हि संस्काराणां स्वातन्त्र्येण स्वप्नमेवाविच्छेदेन प्रवर्तयेयुस्ते सदा जागृतमेव वा । न ह्येतदस्ति । किंतु व्यवस्थयैव स्वप्नजागृत्सुषुप्तयो जायन्ते । तस्मात्तत्संस्काराद्बोधप्रतिबन्धाभ्यामपि तथा, इतोऽपि न ह्यस्ति तेषां स्वातन्त्र्यम् । कुतः । सत्यसंकल्प ईश्वरः स्वाध्यस्तकालशक्त्या यावत्स्वप्नसूक्ष्मविषयभोगप्रदकर्मसंस्कारानुद्बोधयति तावत्स्वप्नावस्था, यदा तु तान्प्रतिबध्नाति तदा जाग्रदित्यादिव्यवस्थोपलम्भात् । ननु तर्हि ईश्वरस्यैव बाह्यप्रपञ्चवत्स्वप्नप्रपञ्चस्याप्यसाधारणकारणत्वात्केनास्य जीवकल्पितत्वमिति चेत्तदधिष्ठानेन कल्पितत्वमिति ब्रूमः । यद्धि यज्ज्ञानान्निवर्तते तत्तदज्ञानकल्पितं भवति च व्यावहारिकजीवज्ञानात्प्रातीतिकजीवतज्जगन्निवृत्तिस्ततस्तदीयनिद्रादोषेण तत्र स कल्पित इति । ननु तर्हि निद्राकल्पित एवास्तु, कुतो जीवकल्पित इत्युच्यत इति चेन्न । निद्राकल्पितत्वेऽपि तदुपहितजीव एव तद्व्यवहारौचित्यात् । उपाधिमन्तरा ईश्वरस्येव जीवस्यापि स्वतः कर्तृत्वायोगात् । नन्वीश्वरस्यैव सर्वाधारतया स्वप्नप्रपञ्चाधिष्ठानत्वमप्यस्त्विति चेन्न, तथा सति बाह्यप्रपञ्चवत्सर्वसाधारणत्वापातात् । बाह्यो हि प्रपञ्च एकरूप एव सर्वैरुपलभ्यते न खलु तथा स्वप्नप्रपञ्चा जीवभेदेन तद्भेददर्शनात् । तस्मात्सिद्धे मनोवच्छिन्नजीवचैतन्य एव स्वप्नप्रपञ्चाधिष्ठानत्वेन तत्कल्पकत्वे येन येन इष्टानिष्टाद्यन्यतरसंस्कारेणाऽऽहितं मनो भवति यत्तथैव भूतसूक्ष्माणि दिव्यस्त्रीदिव्यपुरुषव्याघ्रपिशाचाद्याकारं प्रदर्शयन्ति । एवं मन्त्रादिलाभप्रयोजकादृष्टसंस्कार उद्बुद्धे तदुपदेशोऽपि संगच्छते । किंच संस्कारो नाम भ्रमप्रमाविलक्षणवृत्तिविशेषस्तदुपरि भूतसूक्ष्मैराकारकल्पनायामपि तदन्तराभासो जीवचैतन्यस्यैव तत्तादात्म्यापन्नत्वात् । ननु जडानां भूतसूक्ष्माणां कथमाकारसमर्पकत्वमिति चेदाभासोज्ज्वलितत्वादिति ब्रूमः । तत्रापि जीवाभास एव कुतः । भूतसूक्ष्माणां कार्यत्वेन व्यष्टौ

र्समष्टावपि जीवोपाधित्वनिर्णयात् । अव्याकृतमात्रमीश्वरोपाधिरिति । तदेवं स्वप्न-प्रपञ्चस्यैव बाह्यप्रपञ्चस्याप्यविद्यादोषप्रयुक्तभानविषयत्वान्मिथ्यात्वं सिद्धम् । वस्तु-तस्त्विदमवधेयम् । सद्योजातवामदेवाघोरतत्पुरुषेशानसंज्ञानि पञ्च ब्रह्माणि । तत्र सद्योजातः शिशुरिव प्रतीतिविषयत्वात्स्वप्नकालीनस्तैजसजीवः सद्योजातशब्दे-नोच्यते । तदीयघटकुडयादि सर्वं जगत्प्रातीतिकमेव । जाग्रत्यदर्शनादल्पकालाव-स्थायित्वाच्च । एवं वामं वसुस्रक्चन्दनवनितादि तेन दीव्यतीति वामदेवः । जाग्र-त्कालीनो विश्वजीवस्तदीयं सर्वं पृथिव्याकाशादि व्यवहारक्षमत्वाद्व्यावहारिकं निगद्यते । अनयोश्च परस्परमनुसंधातव्यानुसंधातृरूपत्वान्नियम्यनियन्तृभावः । जा-ग्रत्काले तु न किंचित् । तथा सुषुप्तौ संशयविपर्यासादिक्लेशाभावादघोरः शान्तः । यो हि क्लिष्टः स वैवश्येन क्रूरो भवति । तेन प्राज्ञजीवस्त्वघोरशब्देनाभिधीयते । अयं च विश्वजीवस्यैवावस्थाविशेषत्वान्न तस्मादतिरिच्यते । तदेवं विश्वतैजसप्रा-ज्ञाख्ययोऽप्यमी प्रतिबिम्बरूपत्वान्मृषाभूता एव । अमीषां च बिम्बस्थानीयोऽसङ्गो-द्वितीयः स्वप्रकाशपरमानन्दरूपः साक्षी प्रत्यगात्मा तु तत्पुरुषशब्देन व्यवह्रियते । "तं त्वौपनिषदं पुरुषं पृच्छामि, तमाहुरग्र्यं पुरुषं महान्तं, तमेव चाऽऽद्यं पुरुषं प्रपद्ये" इत्येवमादिश्रुतिस्मृतिषु साक्षिचैतन्य एव तादृशव्यवहारदर्शनात् । स चासौ पुरुषश्च तत्पुरुष इति कर्मधारयः प्रसिद्धः । पुरुष इत्यर्थः । अयं च विशुद्धसत्त्वप्रधानमायोपाधिकत्वादीश इति तत्तज्जीवाध्यारोपविषयत्वात्पारमार्थिको जीव इति च व्यपदिश्यते । सोऽयमेक एव न नाना । तदुपाधेरेकरूपत्वात् । न चैकमुक्तौ सर्वमुक्तिप्रसङ्गः । आवरणसहकृततत्तल्लिङ्गशरीरावच्छेदेन व्यावहा-रिकभेदस्वीकारानुपपत्त्यभावात् । बिम्बभावानाक्रान्तमनुपहितपूर्णचैतन्यं परमात्मा स एवेहेशानशब्देन कथ्यते । अनयोश्च प्रत्यगात्मपरमात्मनोर्नाममात्रभेदो न स्वरूपत इति प्रागेवावोचाम । तेनेयमत्र प्रक्रिया । स्वतः स्फुरत्परमानन्दरूपस्य परिपूर्ण-चैतन्यस्यैकदेकदेशकल्पिता विशुद्धसत्त्वप्रधाना माया नाम शक्तिस्तेन यावन्मायावृ-तचैतन्यं तावत्प्रत्यगात्मा । अनावृतचैतन्यं तु परमात्मेति भेदः । तस्याश्च मायायाः स्थूलसूक्ष्मशरीरोत्पादिका एका विक्षेपशक्तिः । परा तु दृग्दृश्ययोर्बहिः साक्षिज-गतोश्च भेदे सत्यभेदसमर्पिकाऽऽवरणशक्तिर्नाम । अनयोश्च नियन्त्री स्वयमेव भवति कालशक्तिरूपा । इयं च प्रथमं महत्तत्त्वाभिधामादायाऽऽविर्भवति । ततो बहिरहंकाररूपेण ततो बहिर्मनोरूपेण ततो बहिरिन्द्रियादिरूपेणेत्येवं श्रुतिरप्यब्रो-

चत् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धेर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं चिकित्सा काष्ठा सा परा गतिरिति " । एवं च साक्षिण एव प्रत्यगात्मनस्तत्तदन्तःकरणारोपतदपवादाभ्यां जीवत्व ईश्वरत्वे च सिद्धे तदुभयापवादेन शुद्धत्वमपि सिध्यति । " ब्रह्म वेद ब्रह्मैव भवति । भूयश्चान्ते विश्वमायानिवृत्तिः । तथा विद्वान्नामरूपाद्विमुक्तः । परात्परं पुरुषमुपैति दिव्यम् " इत्येवमादिश्रुतिभ्यः । ननु मोक्षे विशेषज्ञानमस्ति वा न वा । आद्ये सविषयत्वापत्तिः । द्वितीये सार्वज्ञ्यभङ्ग इति चेन्न । अकरणत्वात्तदयोगेऽपि तदयाक्षतत्वात् । करणानीन्द्रियाण्येव ब्रूहि खलु मनःषष्ठानि स्वस्वस्थाने स्थित्वा विशेषविज्ञानं जनयन्ति । तदभावान्न स्वत एवाऽऽत्मने, विशेषविज्ञानं निर्विषयज्ञानरूपत्वात् । तथाऽपि तु सार्वज्ञ्यं न हीयते । सदैव स्वप्रकाशत्वेन सकलावभासकत्वात् । ननु तर्हि सुषुप्तात्को विशेष इति चेत् । अपरिच्छिन्नत्वस्यैव वैशेष्यात् । चितिर्हि खलु तत्तदवच्छेदकोपाधिवशात्परिच्छिन्नेव न सर्वं भासयतीत्यसर्वज्ञैवोच्यते दीपादिवत् । यथा वा दीपो घटादौ निहितस्तदन्तर्वर्तिप्रदेशमेव भासयति । बहिः कुड्यादिव्यवहितदेशे निहितस्तावन्तमेव । ततोऽपि बहिर्विततदेशेऽवस्थापितस्तावन्तमपि प्रकाशयति । तथा चिन्मयात्माऽपि व्यष्टिदेहेऽपरिच्छेदे विगलिते विराडस्मीति मन्यते । तस्मिँल्लीने सूत्रात्मेति हिरण्यगर्भ इति । तत्परिच्छेदाभाव ईशोऽस्मीति । तदुपाध्यभावे तु स्वाध्यस्तं सर्वं कार्यकारणात्मकं जगदवभासयत्यपरिच्छिन्नत्वस्यैव सुषुप्तद्वैशेष्यं विशेषोऽस्ति । ननु तर्हि मोक्षे सुखं संवेद्यते न वा । आद्ये सविशेषत्वापत्तिः । द्वितीयेऽपुरुषार्थत्वापत्तिरिति चेन्न । चितेः स्वातिरिक्तसंविदन्तरानपेक्षत्वात् । यद्यपि चितिर्बाह्यविज्ञाने करणादिसाधनमपेक्षते तथाऽपि स्वानन्दानुभवे नास्त्यपेक्षा । स्वतःस्फुरणरूपत्वात् । अन्यथा प्रस्तरादिभिरविशेषापत्तेः । ननु तर्हि ज्ञातृज्ञेयभावो दुष्परिहर इति चेन्न । स्वरूपानतिरेकात् । सौरालोकादिवत् । यथा वा सौरादेर्ज्योतिषः सत्ताप्रकाशानन्दाः स्वरूपभूता एव नातिरिच्यन्ते । यद्वा सूरादिवदित्येव दृष्टान्तत्वेनोपादेयम् । ततो यथा सूर्योऽस्ति सूर्यो भातीति प्रियश्चेत्येवं त्रयः । अथवा प्रकाशोष्णकिरणास्त्रयो यथा सूर्यादेर्न भिद्यन्ते तथा ज्ञानमात्रस्वरूपस्य ब्रह्मणः स्वरूपभूता एव सत्ताप्रकाशानन्दा नातो भिन्नास्तेन तत्र ज्ञातृज्ञेयभावानङ्गीकारादिति । अत्र केचित् । निर्विशेषज्ञानरूपं ब्रह्म तस्य सत्ताप्रकाशानन्दा-

स्त्रीयो धर्मास्तत्रैक आनन्दरूपो धर्म एव निखिलजगदाकारेण परिणमते। ततश्च ब्रह्मणो धर्मित्वात्तदेकदेशपरिणामस्वीकारेणैव सर्वोपपत्तौ किं प्रकृत्यन्तरकल्पनेने-त्याहुः। परे तु न ब्रह्मणि धर्मधर्मिभावो निर्विशेषणत्वश्रवणात्किंतु तस्मिन्नध्य-स्ताऽनादिभावरूपाऽविद्या सत्ताप्रकाशयोर्द्वयोरुपजीव्यत्वेन तदीयानन्दांशमात्रमा-वृत्य विचित्रमिन्द्रजालं जनयति। विद्यया तु तदपह्नवेऽनावृतानन्दरूपेण स्वत एव ब्रह्म विराजत इत्याहुः। कः श्रेयानुत्तरः। ननु ब्रह्मणः स्वतो ज्ञातृत्वायो-गाज्जीवस्याऽऽविद्यकत्वेन तत्पूर्वमभावात्को वा ब्रह्मण्यविद्यामध्यस्यतीति चेत्। अविद्यैवेति ब्रूमः। तस्या एव स्वपराध्यासे कारणत्वात्। अथात्र विचारक्रमः। विश्वापरपर्यायो व्यावहारिकजीवो ब्रह्म तदीयोपाधिभूता बुद्धिर्मूलप्रकृतिस्तस्याम-ज्ञायमानं सूक्ष्मभोगप्रदमदृष्टं संस्काररूपेणावस्थितं यदा फलोन्मुखं भवति तदा तत्प्रथमं निद्रारूपमावरणं जनयति। तेन पूर्वरूपाविस्मरणं पूर्नजगददर्शनं भवति। उभयोरेव वा विस्मरणादर्शने जायेते। आवरणमन्तरा विक्षेपानुपपत्तेरिति। तदु-त्तरमतीतानागतवर्तमानसंस्काररूपमदृष्टं स्वाप्नजगदाकारेण परिणमते। ततः प्रच्यु-तपूर्वानुसंधानो व्यावहारिको जीवोऽदृष्टोपस्थापितं स्वाप्नशरीरं तद्भोग्यविषया-दिकमेवानुसंदधानः सूक्ष्मविषयभोक्तारं तैजसमेवाऽऽत्मानं मन्यतेऽतो भ्रमति च। निद्रादोषनिवृत्तौ तु विहितपूर्वानुसंधानः स्वरूपेणैव राजते। यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत्। स एव प्रतिबुद्धस्य नैव मोहाय कल्पत इति। तत्र निद्रादोषनिवृत्तौ कर्मक्षयो वा परप्रयत्नो वा हेतुः। एवमस्मीति प्रत्यगभिन्नपरमा-त्मानुसंधानवती महत्तत्त्वाख्या बुद्धिर्मूलप्रकृतिस्तस्यां चाविज्ञायमानस्थूलविषयभो-गप्रदमदृष्टं संस्काररूपेणावस्थितं फलोन्मुखं सदावरणं जनयेत्। तच्चासत्त्वापा-दकमभानापादकं चेति द्वेधा प्रत्यक्परमात्मोभयनिष्ठं ततस्त्वतीतानागतवर्तमानसं-स्काररूपमदृष्टं जाग्रज्जगदाकारेण परिणमते। ततस्तादृशबुद्ध्यवच्छिन्नः प्रत्य-गात्माऽपि गलितपूर्वसंधानः कर्मोपस्थापितं किमपि स्थूलसूक्ष्मशरीरमेवानुसंदधानः परिभ्रमति संसारपर्यावर्ते। अथ कदाचिद् गुर्वादिप्रयत्नेन वा कर्मक्षयेण वा तादृशावरणनिवृत्तौ प्रत्यगभिन्नपरमात्मसाक्षात्कारवान्महति महीयते स्वमहिम्नि तदा तु जीवन्मुक्त इत्यापाद्यते। तदुक्तमभियुक्तैः—अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमात्मानं बुध्यते तदेति। ततश्च तदधिगम

उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति न्यायाच्च जीवन्मुक्तस्य संचित-क्रियमाणयोः पापयोः संश्लेषः संभवति । देहारम्भकस्य तु तत्त्वज्ञानोत्पादकत्वान्न विनाश उपपद्यते । अत एव तदुपक्षयपर्यन्तं जीवन्मुक्तस्यापि बाधितानुवृत्त्या संसारित्वं संगच्छते । तस्मिन्नुपक्षीणे तु न तस्य प्राणा उत्क्रामन्तीति श्रुतेः । अन्तःकरणतत्संस्कारविशिष्टाज्ञानेऽपि नाशमात्यन्तिकं गते सत्यखण्डस्वप्रकाशपरमानन्देन विराजते न पुनरावर्तते योगी । “ न स पुनरावर्तते ” इत्यादिश्रुतिभ्यः । ननु स्वप्नप्रपञ्चस्य जीवकल्पितत्वेऽपि बाह्यप्रपञ्चस्य तत्कथं युक्तिसहमिति चेन्न । ईशेन स्वरूपतः कल्पितोऽप्ययं व्यवहारास्पदो जीवकल्पित एव । यथैकस्मिन्नीशकल्पितस्त्रीपिण्डे भार्येति मातेति कन्येत्यादिव्यवहारस्तत्तज्जीवकल्पितः, एवं जीवत्वाविशेषेऽप्याधिकारिकैरीशकल्पितबुद्धिभिर्महानुभावैर्ब्रह्मादिभिर्वेदशास्त्रादिरूपेण यौ विधिनिषेधौ कल्पितौ तावनुतिष्ठन्त्यस्मदादयः । भवति च तत्तथा यद्यथा तैरुपपादितं तदभिन्नत्वादित्याद्यवान्तरविशेष ऊहनीय इत्यलं पल्लवितेन । प्रकृतमनुसरामः । भवति सद्य इति भवः । स्वप्नावस्थाभिमानी तैजसः । रोदयति संसारक्लेशैरिति रुद्रः । जाग्रदवस्थाभिमानी विश्वः । “ अनीशया शोचति मुह्यमानः ” इति श्रुत्यन्तरात् । तदुभयाभ्यां नमः । चकारावृत्तिरत्रोभयत्र नमःशब्दान्वयाय बोध्या ॥ १ ॥

नमः॑ श॒र्वाय॑ च पशु॒पत॑ये च ॥ २ ॥

शर्वः परिलीनोपाधित्वाद्गतक्रौर्यः । प्राज्ञः सुषुप्त्यभिमानी । अविद्यावृतत्वेन पशुस्थानीयानामेषां पतिः प्रकाशकः साक्षी प्रत्यगात्मा पशुपतिरित्युच्यते ताभ्यां नमः ॥ २ ॥

एवं व्यष्टिदेहाभिमानिनो निरूप्य समष्ट्यभिमानिनस्तानाह —

नमो॒ नील॑ग्रीवाय च शिति॒कण्ठा॑य च ॥ ३ ॥

तत्र तमःप्रधानविक्षेपशक्त्यभिमानित्वान्नीलग्रीवो विराट् तस्मै नमः सैव लिङ्गशरीरहेतुर्मलिनसत्त्वप्रधाना तदभिमानी सूत्रात्मा शितिकण्ठस्तस्मै नमः ॥३॥

नमः॑ कप॒र्दिने॑ च॒ व्यु॑प्तकेशाय च ॥ ४ ॥

स एव कपर्दी तपस्वी हिरण्यगर्भश्चोक्तस्तस्मै नमः । विद्याशक्तिप्राधान्येन व्युप्ता विकीर्णाः स्थिरचरजातयः केशस्थानीया यस्मात्तस्मै । यद्वा व्युप्तः सर्वत.

प्रसृतः केशो व्याकृताकाशरूपो यस्य. " एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओत-प्रोतश्च " इति श्रुतौ मायोपाधावाकाशशब्दप्रयोगदर्शनात् । व्योमकेश इति तन्नामप्रसिद्धेश्च ॥ ४ ॥

नन्वेकस्यैव कथं विराड्विश्वादिरूपमत आह—

नमः सहस्राक्षाय च शतधन्वने च ॥ ५ ॥

अक्षस्थानीयवृत्तीनां वैशद्यमालिन्यतारतम्यात्तदुपहितचितेरपि तथा व्यवहार-संभवादिति भावः । शतं धन्वानि क्षणलवादिकालरूपाणि यस्य तस्मै नमः ॥५॥

नमो गिरिशाय च शिपिविष्टाय च ॥ ६ ॥

गिरौ प्रपञ्चे जीवेशादिरूपेण शेते तस्मै । शिपयो जीवास्तदनुसंधाता शिपिविष्टः सर्वसाक्षी रुद्रः । " यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति " इति श्रुतेः । तस्मै नमः ॥ ६ ॥

नमो मीढुष्टमाय चेषुमते च ॥ ७ ॥

स एव कर्मानुरूपेशितृत्वान्मीढुष्टमः कामसेवकः । यत इषुमाञ्जीवाश्रयः । तदर्थमेवेशस्य सृष्ट्यादौ प्रवृत्तिरित्यर्थः ॥ ७ ॥

इत एकादशयजुरन्तं साक्षिण उपाधिधर्मैस्तथा तथा व्यपदेशभाक्त्वमुच्यते—नमो ह्रस्वायेत्यादितः प्रथमायेत्यन्तेन—

नमो ह्रस्वाय च वामनाय च ॥ ८ ॥

नमो बृहते च वर्षीयसे च ॥ ९ ॥

नमो वृद्धाय च संवृध्वने च ॥ १० ॥

नमो अग्रियाय च प्रथमाय च ॥ ११ ॥

" बुद्धेर्गुणेनाऽऽत्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः । अणोरणीयान्महतो महीयान् " इत्यादिश्रुतिष्वपि तथोक्तत्वात् । यद्वा संवृध्वनेचेत्यन्तमेव साक्षिस्वरूपनिरूपणम् । इतस्तु परपदमारुरुक्षोर्योगिनो भूमिकारोहक्रम उच्यते । तत्र बहूनां संसारिजीवानामग्रे पुरः पुरो यातीत्यग्रियः । तत्प्रयोजनं तु वात्सल्यात्तेषामप्युपदेशार्थमाह्वानाय । अथवा-अग्रे सद्गुरोः समीपे स्वात्मलाभार्थं यातीत्यग्रियो मुमुक्षुः । " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् " इति श्रुतेः । स पुनर्गु-

रोरुपदेशमवाप्य ततः प्रथमां भूमिं जेतुमुपक्रमते तदा प्रथम इत्युच्यते । तथा चा-यमत्र प्रयोगः । शमादिसंपन्नो रहोदेशे स्थिरसुखमासनमासीनो योगी प्राणायाम-पुरःसरं गुरूक्तयुक्त्या स्थूलदेहासङ्गेन बहिरिव मनो विधाय तत्प्रथमं पादादिजा-नुपर्यन्ते भूस्थाने धारयन्नीहारमात्रं पश्यति । पादादिजानुपर्यन्तमङ्गं तु तिरोहित-मिव न पश्यति । ततो लुप्ताधरभागो जानूपरिदेहो नीहारमग्नो संदिग्धाविपर्यस्ततया प्रतीयते । सोऽयं भूमिजयः । एवं जान्वादिपायन्ते जलस्थाने चित्तं धारयतो धूममात्रं दृश्यते स्थानं च तिरोधीयते ततः पायूर्ध्वभागमात्रं धूम्रधूसरमिवाऽऽभा-ति । एवमग्रेऽपि ज्ञेयम् । तदिदमुक्तं भगवता याज्ञवल्क्येन–

पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते । आजानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ॥ १ ॥

आपायोर्हृदयान्तं यद्वह्निस्थानं तदुच्यते । हृन्मध्यात्तु भ्रुवोर्मध्यं यावद्वायुकुलं भवेत् ॥ २ ॥

आभ्रूमध्यात्तु मूर्धान्तमाकाशमिति चोच्यते । पृथिव्यां वायुमास्थाय लकारेण समन्वितम् ॥ ३ ॥

ध्यायंश्चतुर्मुखाकारं ब्रह्माणं सृष्टिकारणम् । धारयेत्पञ्च घटिकाः पृथिवीजय माप्नुयात् ॥ ४ ॥

वारुणे वायुमारोप्य वकारेण समन्वितम् । स्मरन्नारायणं देवं चतुर्बाहुं शुचि-स्मितम् ॥ ५ ॥

शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् । धारयेत्पञ्च घटिकाः सर्वरोगैः प्रमु-च्यते ॥ ६ ॥

वह्नावानिलमारोप्य रेफाक्षरसमन्वितम् । त्र्यक्षं वरप्रदं रुद्रं तरुणादित्यसंनि भम् ॥ ७ ॥

भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरेत् । धारयेद्घटिकाः पञ्च वह्निनाऽसौ न दह्यते ॥ ८ ॥

मारुतं मरुतां स्थाने वर्णदेवसमन्वितम् । धारयेत्पञ्च घटिका वायुवद्व्योमगो भवेत् ॥ ९ ॥

वर्णोऽत्र यकारः । देव ईश्वरः । रूपं रुद्रवत् ।

आकाशे वायुमारोप्य हकारोपरि शंकरम् । बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ।। १० ।।

चित्तेन चिन्तयेत्स्वस्थं मुहूर्तमपि चिन्तयेत् " इति । पञ्चभूतजयफलं श्रुतिरप्याह—" पृथिव्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् " इति । सेयं पञ्चभूतजयात्मिका प्रथमा भूमिः । अनयैव प्राणजयोऽपि भवति । यत एव क्षुत्पिपासादिनिवृत्तिराकाशगमनपरकायप्रवेशाद्यपि सिध्यतीत्यन्यत्र विस्तरः । किंचास्यां भूमौ विजितायां विशिष्टान्तर्धानाख्या सिद्धिरुपतिष्ठते । तद्यथा—समीपे वसन्नपि योगी न दृश्यते । वदन्नपि न श्रूयते । प्रसृतगन्धोऽपि नावघ्रियते । सशरीरोऽपि न स्पृश्यते । सरसोऽपि न स्वाद्यत इति । ततश्च प्रथमभूमिकारूढाय तस्मै नमः ॥ ८ ॥ ॥ १० ॥ ११ ॥

इदानीं दशेन्द्रियजयात्मिकां द्वितीयभूमिमारूढमाह—

नम॑ आ॒शवे॑ चाजि॒राय॑ च ।। १२ ॥

मनस्यवहित एव चक्षुरादीनां स्वस्वविषयशक्तिर्नान्यथा । तथा च श्रुतिः—" अन्यत्रमना अभूवं नाश्रौषम् " इत्यादिः । मनसैव पश्यति मनसैव शृणोति, इत्यादिश्च । " यद्धि मनसा ध्यायति तद्वाचा वदति " इति श्रुत्यन्तराच्च वागादीनां मनोनियम्यत्वम् । तदेवं सिद्धे तत्तादिन्द्रियाणां मनोमात्रभावनादार्ढ्येन यतो, यतो विषयविशेषे मनः पतति तत्र तत्रेन्द्रियाण्यपि पतन्ति । तं तमवगच्छन्ति च विषयम् । दूरदेशदर्शनदूरश्रवणाद्या सिद्धिरुपतिष्ठते यस्मै स आशुर्व्यापको यतोऽसंनिहितदेशेऽपि लब्धवृत्तिकोऽजिरस्तस्मै तस्मै च नमः । भगवद्विभूतित्वादिति भावः ॥ १२ ॥

मनोजय एव तृतीयभूमिका तत्सिद्धौ मनोगतिः सिध्यतीत्यभिप्रेत्याऽऽह—

नमः॒ शीघ्रि॑याय च॒ शीभ्या॑य च ॥ १३ ॥

" आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया " इत्यादौ करणभूतस्य मनसः प्रमातृनियम्यत्वावधारणात्तन्मात्रभावने बालमूकादिवन्निर्मनस्कत्वं स्वत एव जायते । सोऽयं मनोजयः । प्रमाता चाहंकारावच्छिन्नचैतन्यमिति प्रागुक्तम् । इदं च कृतपञ्चभूतजयस्यैव । नाकस्मात्प्रथमादिभूमिमुल्लङ्घ्य प्रकृतभूमिमारोहतो मनो-

गत्यादि सिध्यतीत्येवमग्रेऽपि बोध्यम् ॥ १३ ॥

नमं ऊर्म्यांय चावस्वन्यांय च ॥ १४ ॥

अहंकारोऽपि द्वेधा । सामान्यरूपो विशेषरूपश्च । तत्रास्मीतिप्रत्ययमात्रशरीर आद्यः । ममेदमित्यहमिति विशेषणाभिव्यक्तोऽपरः । तत्र विशिष्टाहंकारजयात्मिका मधुमती नाम भूमिः । यामधिकृत्योक्तं पतञ्जलिना—“ स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गादिति ” । स्थाने तिष्ठन्तीति स्थानिनो देवास्तैरुपनिमन्त्रणे कृते सति सङ्गस्मयौ न कर्तव्याविति तदर्थः । ननु महानुभावास्ते किमिति मनुष्यमुपनिमन्त्रयन्त इति चेत्तददृष्टनियन्त्रितत्वादिति ब्रूमः । तथा हि । ब्रह्मविष्णुमहेशैः सस्त्रीकैर्विना शक्रादिपिपीलिकान्तजीवानामस्ति खलु पुण्यापुण्यमयमदृष्टम् । तच्च स्थूलदेहाश्रयमन्तरा सुखदुःखप्रदानाक्षममिति प्रातीतिकव्यावहारिकान्यतरशरीरमपेक्षते । यथा वा—वृत्रहन्तुरिन्द्रस्य ब्रह्महत्यादोषो दुःखं दित्समानः पलितकेशं रक्तपटं बीभत्सतरं स्त्र्यादिशरीरमाश्रितवान् । यथा वा स्वप्नादौ दुःखप्रदमदृष्टं विश्वस्तादिरूपमाश्रित्य समाश्लिषति सुखप्रदमपि । तथा च श्रूयते—“ यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ” इति । ततश्च त इन्द्रादिदेवास्तदीयसत्त्वोत्कर्षमसहमाना उपनिमन्त्रयन्ते । इमा रामाः सुधेयं जरामृत्युहारिणी देवयानमिदमपूर्वमारुह्यतामायुष्मतेत्यादि । यद्वा तदीयपुण्यादृष्टपरिणामविशेषा एव ते देवा उपनिमन्त्रयन्त इति । ननु तेषां कुतः प्राक्सिद्धविमानादीनीति चेददृष्टकल्पितान्येवेति ब्रूमः । स्वर्गोऽपि तथा नव्य एव । तदुक्तं योगवासिष्ठे—“ त्रसरेणूदरेऽपीन्द्रः पश्यति स्म जगत्त्रयम् ” इति । ततश्च तादृशविशिष्टाहंकार इहोर्मिशब्देनोच्यते । अहंकारोर्मयो भूय उत्पद्यन्तेऽविवेकिनः । इति वचनात् । तज्जयी ऊर्म्यस्तस्मै नमः । अस्मितामात्रजयाद्बहुकायनिर्माणसामर्थ्यम् । तथा च पातञ्जलसूत्रम्—“ निर्माणचित्तान्यस्मितामात्रादिति ” । शारीरकसूत्रं च—“ प्रदीपवदावेशस्तथा हि दर्शयति ” इति । ततश्चास्मितामात्रमनुसंदधतो विक्षेपावरणराहित्यादशब्दस्थानवदैकाग्र्यं जायत इति । तदेतदाह—अवस्वन्याय चेति । अवस्वने स्थिरजल इव स्वरूपे तिष्ठतीत्यवस्वन्यस्तस्मै नमः ॥ १४ ॥

नमः स्रोतस्यांय च द्वीप्यांय च ॥ १५ ॥

" सलिल एको द्रष्टाऽद्वैतो भवति " इति श्रुतौ चिदात्मनः सलिलतुल्यत्वापादनात् । स्रोतसि प्रवाहवद्वाहके संसारे तिष्ठति जीवरूपेणेति स्रोतस्यस्तस्मै । द्वीप इव समष्टिमायोपाधावीशरूपेण तिष्ठतीति द्वीप्यस्तस्मै नमः ॥ ३५ ॥

इति रुद्रभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

---

अतीतेऽनुवाके पञ्चविधभूमिकाजय उक्तः । इदानीं प्रत्यगात्मस्वरूपमुच्यते—

**नमो॑ ज्ये॒ष्ठाय॑ च कनि॒ष्ठाय॑ च ॥ १ ॥**

एक एव परमात्मा विशुद्धसत्त्वमायोपाधिकः सन्नीश्वर इति स्तूयते । मलिनसत्त्वप्रधानलिङ्गशरीरोपाधिकः सञ्जीव इति । अनयोश्चोपाध्योः साक्षिमात्रमेकमेव चैतन्यं प्रत्यगात्मपरमात्मशब्दैर्व्यवह्रियते । तत्र विचारेण बुद्धेर्निर्विचारवैशारद्येऽध्यात्मप्रकाशो ऋतंभरा तत्र प्रज्ञेत्युक्तलक्षणायां षष्ठ्यां भूमौ स्थितोऽवस्थात्रयसाक्षी प्रत्यगात्मा विद्यैश्वर्यादिभिरधिको ज्येष्ठः स एव विस्मृतस्वरूपो भ्रान्त इव संसारीव वर्तमानः कनिष्ठस्तस्मै तस्मै च नमः ॥ १ ॥

**नमः॑ पूर्व॒जाय॑ चापर॒जाय॑ च ॥ २ ॥**

स च देहात्प्रागेव सिद्धः पूर्वजः । देहाद्युत्पत्त्यनन्तरमपि तत्तदवस्थाप्रापकोऽपरजस्तस्मै तस्मै च नम इति पूर्ववत् ॥ २ ॥

**नमो॑ मध्य॒माय॑ चापग॒ल्भाय॑ च ॥ ३ ॥**

मध्यमस्तरुणावस्थासाक्षी । अपगल्भो बाल्यावस्थासाक्षी तस्मै नमः ॥३॥

**नमो॑ जघ॒न्या॑य च॒ बुध्नि॑याय च ॥ ४ ॥**

जघन्यो वार्धक्यसाक्षी । वृद्धावस्था हि लोके निन्द्यते । बुध्नं चात्र संसारमूलमविद्या तत्प्रकाशकत्वेन वर्तमानो बुध्नियस्तस्मै नमः ॥ ४ ॥

**नमः॑ सो॒भ्या॑य च प्रतिस॒र्या॑य च ॥ ५ ॥**

संसारित्वादेवोभाभ्यां पापपुण्याभ्यां वर्तत इति सोभ्यः । प्रतिसर कङ्कणबन्धः । तमर्हतीति प्रतिसर्यः । बुद्धियुवत्या सह कृतविवाह इव वर्तमान इत्यर्थः । तस्मै तस्मै च नमः ॥ ५ ॥

**नमो॒ याम्या॑य च॒ क्षेम्या॑य च ॥ ६ ॥**

पापफलभोगाय यमलोकमर्हतीति याम्यस्तस्मै नमः। स एव बहुजन्मार्जित-पुण्यवशेन क्षेमो मोक्षस्तमर्हतीति क्षेम्यस्तस्मै नमः॥ ६ ॥

नम॑ उर्व॒र्या॑य च॒ खल्या॑य च ॥ ७ ॥

उर्वरा सर्वसस्याढ्यभूतुल्या मायैव तत्प्रकाशक उर्वर्यस्तस्मै नमः। खलानां कामक्रोधादीनां प्रकाशकः खल्यस्तस्मै नमः॥ ७ ॥

नमः॒ श्लोक्या॑य चावसा॒न्या॑य च ॥ ८ ॥

श्लोका वेदमन्त्रास्तत्प्रतिपाद्यः श्लोक्यस्तस्मै नमः। अवसानमुपनिषदस्तत्प्रति-पाद्योऽवसान्यस्तस्मै च। कर्मकाण्डे कर्मकर्तृप्रमातृरूपेणोपनिषद्भिस्त्वसङ्गासंसारि-त्वादिरूपेण प्रतिपाद्य इति यजुर्द्वयार्थः॥ ८ ॥

नमो॒ वन्या॑य च॒ कक्ष्या॑य च ॥ ९ ॥

वनं चात्र दुस्तरत्वात्संसारस्तमर्हतीति वन्यः। कक्षः पापपुण्यसमूहस्तमर्हतीति कक्ष्यस्तस्मै च नमः॥ ९ ॥

नमः॒ श्रवाय॑ च प्रतिश्र॒वाय॑ च ॥ १० ॥

श्रवः श्रूयत इति परादिनयं तत्प्रकाशकः। विशेषेण श्रूयत इति प्रतिश्रवः। वैखर्यादिसाक्षी तस्मै तस्मै च नमः॥ १० ॥

नम॑ आ॒शुषे॑णाय चा॒ऽऽशुर॑थाय च ॥ ११ ॥

आशुगामिनी इन्द्रियरूपा सेना यस्य स आशुसेनस्तस्मै नमः। आशुगामी देहरूपो रथो यस्य स आशुरथस्तस्मै च नमः॥ ११ ॥

नमः॒ शूरा॑य चावभि॒न्दते च ॥ १२ ॥

अत एव शूरो धैर्यवान् यतो बुद्ध्यैव विवेकवत्या कामाद्यरीनवभिन्दतीत्यव-भिन्दन्। तस्मै च नमः॥ १२ ॥

नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च ॥ १३ ॥

वर्म चात्राऽऽवरणं तद्वते। वरूथं हृदयनीडस्थलं तद्वासिने च नमः॥ १३ ॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च ॥ १४ ॥

बिल्वानि हृदयस्थशतैकनाड्यस्तच्चकासकाय। कवचं पञ्चमहाभूतावरणं तद्वान्कवची। कञ्चुकीत्यर्थः। तस्मै नमः। भूतकञ्चुकी तदा विमुक्तो भूयः प्रति-

समः पर इति भूतकञ्चुकानिर्मुक्तो जीवः पराशिवायाः पतिसमो भवतीति तदर्थः ॥ १४ ॥

नमः श्रुताय च श्रुतसेनाय च ॥ १५ ॥

वेदेष्वतसकृच्छ्रुतो यस्तस्मै । श्रुता प्रसिद्धा सेना यस्य तस्मै च नमः ॥ १५ ॥

इति रुद्रभाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

---

एवं षष्ठेऽनुवाके प्रमातृसाक्ष्युभयस्वरूपेण प्रत्यगात्मस्वरूपोऽभिहितो रुद्रः। अथेदानीं सप्तमेऽनुवाके जगत्सृष्ट्यादिकर्तुर्मायोपाधेरीश्वरस्य स्वरूपमुपदिश्यते । नमो दुंदुभ्याय चेत्यादिषोडशभिर्यजुर्भिः—

नमो दुंदुभ्याय चाऽऽहनन्याय च ॥ १ ॥

इदं तावदवधेयम् । यथाऽऽवरणविक्षेपशक्तिद्वयवती प्रमातृबुद्धिनिष्ठा निद्रा प्रमातारमावृत्य तस्मिन्नभिनवावेव जीवेश्वरौ निर्माति । तौ च यावत्स्वप्नं नियम्य-नियन्तृभावेन स्थितावपि प्रमातुः स्वस्वरूपावबोधसमकालमुभावपि विनश्यतः । मृषात्वात् । अधिष्ठानभूतं प्रमातृचैतन्यं तु न विनश्यति । सत्यत्वात्तथेहापि शक्तिद्वयवती प्रत्यगात्मनिष्ठा माया तमावृत्य तस्मिन्नभिनवौ जीवेश्वरौ नियम्यनियन्तृभावेन स्थितौ निर्माय जगदपि तयोर्व्यवहारसंपत्तये समुत्पादयति । जीवस्वरूपभूतप्रत्यगात्मावबोधसमसमयमुभावपि जगता समं विलीनौ भवतः । सोऽयं मृषाभूतोऽपीश्वरो यावत्संसारं जीवेन सहैवाऽऽस्त इति । नन्वेकेन स्वरूपस्थितजीवेन सहैव विलीन ईश्वरः कथमन्यान्बद्धजीवान्नियच्छत इति चेन्न । मुक्तजीवदृष्ट्या तल्लयेऽपीतरदृष्ट्या तत्सत्त्वाङ्गीकारात् । यथा वैकस्य प्रबुद्धजीवस्य दृशा स्वाप्नेश्वरे विलीनेऽपि न हीतरसुप्तदृष्ट्या तल्लयः संगच्छते तद्वत् । इदमेमाभिप्रेत्य वाचस्पतिमिश्राः प्रतिजीवं प्रपञ्चभेदस्तद्भेदादेवेश्वरभेदोऽपि प्रत्यभिज्ञा चातिसादृश्यादित्यादि । वस्तुतस्तु यथा भूमेरभ्यन्तरे विद्यमानमपि निध्यादिकं न हि निध्यञ्जनमन्तरा चक्षुष्मानपि कश्चन द्रष्टुमीष्टे तथेहापि जगति प्राक्सिद्धमपीश्वरं विद्याञ्जनमन्तरेण न कश्चिद्द्रष्टुमर्हति । तस्माज्जगत्तदीश्वरदर्शने विद्यैवाञ्जनायते । यथा प्रातिभासिकतदीश्वरदर्शने निद्रेति । तदेवमुक्तलक्षणस्येश्वरस्य प्रभावातिशयमाह ।

पिहितकर्णेन श्रूयमाणो ध्वनिर्दशविधः । तथा च हंसोपनिषदि "चिणीति प्रथमः । चिणिचिणीति द्वितीयः । घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थः । पञ्च गस्तन्त्रीनाद षष्ठस्तालनादः । सप्तमो वेणुनादोऽष्टमो मृदङ्गनादो नवमो भेरीनादो दशमो मेघनादः" इति । तत्र मनइन्द्रियाणामैकाग्र्ये यथाक्रमं शब्दाञ्शृण्वानो योगी यदा नवमं भेरीनादं शृणोति तदा शुद्धसत्त्वोपाधिर्वासुदेवस्तेन साक्षात्क्रियत इति । ततश्च दुंदुभिशब्दोऽभिव्यञ्जको यस्य स दुंदुभ्यस्तस्मै नमः । आहन्यतेऽनेनेत्याहन इच्छादण्डः कुण्डलिन्युत्थापनद्वारा येनासौ शब्दोऽभिव्यज्यते तद्रूपाय च नमः ॥ १ ॥

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च ॥ २ ॥

धृष्णुर्भीरुभ्यो वातादिभ्योऽधिकधैर्यशाली । तथा च श्रुतिः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः" इत्यादि । यतो वातादयो बिभ्यति स धृष्णुरिति किं वक्तव्यं तस्मै नमः । प्रमृशो विमर्शनशीलः । यस्य ज्ञानमयं तपः, इति श्रुतेः । तस्मै च नमः ॥ २ ॥

नमो॑ दू॒ताय॑ च॒ प्रहि॑ताय च ॥ ३ ॥

दूतोऽग्निरूपः "रुद्रो वा एष यदग्निरिति श्रुतेः । अग्निश्च देवदूतः प्रसिद्धः "अग्निं दूतं वृणीमहे" इत्यादौ । प्रकर्षेण हितो मित्ररूपः "द्वा सुपर्णा सयुजा सखायौ" इत्यादौ तस्य सखित्वश्रवजात् । तस्मै तस्मै च नमः ॥३॥

नमो॑ नि॒ष॒ङ्गिणे॑ चेषु॒धि॒मते॑ च ॥ ४ ॥

निषङ्गी खड्गयुक्तः । इषुधिर्बाणाधारस्तद्वांस्तस्मै नमः ॥ ४ ॥

नम॑स्ती॒क्ष्णेष॑वे चाऽऽयु॒धिने॑ च ॥ ५ ॥

तीक्ष्णा इषवो बाणा यस्य तीक्ष्णेषुः । आसमन्ताद्युध्यतीत्यायुधिस्तस्मै नमः ॥ ५ ॥

नमः॑ स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥ ६ ॥

शोभनं धन्व यस्य स सुधन्वेत्येवं चतुर्विधस्वरूपाय परमेश्वराय नमः । सगुणमूर्तेर्भगवत एतत्साहित्यं तु जीवरक्षणायेति बोध्यम् । तथा च श्रुतिः—"अहिरिव भोगैः पर्येति बाहुं ज्यायाहेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि

विद्वान्पुमान्पुमांसं परिपातु विश्वतः " इति । वस्तुतः क्रोध एव निषङ्गः कर्माशय इषुधिः । इषवः कामादयः शोभनमायुधं ज्ञानवैराग्यादि शोभनं धनुर्बुद्धिः । अमीभिर्यथातथं ज्ञानिनः पात्यज्ञानिनश्च संसारयतीति फलितोऽर्थः । तादृशाय सर्वान्तर्यामिणे नमः ॥ ६ ॥

नमः स्रुत्याय च पथ्याय च ॥

स्रुतिः स्वल्पो देवलोकमार्गः । दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति " इति श्रुतिप्रसिद्धस्तत्प्रवर्तकाय नमः । पन्था ब्रह्मलोकमहामार्गः " तेऽर्चिरभिसंभवन्ति " इतिश्रुतिप्रसिद्धस्तत्प्रवर्तकः पथ्यस्तस्मै नमः ॥ ७ ॥

नमः काट्याय च नीप्याय च ॥ ८ ॥

कुत्सितं नरकादिकमटन्त्यनेनेति काटो निषिद्धाचरणमार्गस्तत्प्रवर्तकः काट्यस्तस्मै नमः । नीपोपलक्षितं मणिद्वीपनिलयनं तत्रस्थदेवतोपासनरूपमार्गप्रवर्तको नीप्यः । यं वाममार्गमाहुः । यश्च " स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् " इति भगवत्पूज्यपादैरभिहितस्तस्मै नमः ॥ ८ ॥

नमः सूद्याय च सरस्याय च ॥ ९ ॥

सूदा इव यत्र कर्मकारा भवन्ति तादृशः संसारमार्गस्तत्प्रवर्तकाय नमः । सरसो हि सर्वेभ्यो मार्गेभ्यो यो मोक्षमार्गस्तत्प्रवर्तकाय नमः । " रसो वै सः । रस२ ह्येवायं लब्ध्वाऽऽनन्दी भवति " इति श्रुतौ चिदात्मनो रसरूपत्वात्तेन सह जीवः सर्वान्कामानवाप्नुत इति सरसत्वम् । तथा चाऽऽम्नायते—" सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता " इति ॥ ९ ॥

नमो नाद्याय च वैशन्ताय च ॥ १० ॥

इडापिङ्गलासुषुम्नास्तिस्रो नद्यो वर्णसाम्याद्गङ्गायमुनासरस्वतीतुल्यास्तत्राभिव्यक्तो नाद्यः । वैशन्तोऽल्पसरस्तद्वद्दहरप्रकाशस्तत्र प्रकाशमानाय नमः ॥१०॥

नमः कूप्याय चावट्याय च ॥ ११ ॥

कूपोऽत्र कण्ठकूपः । यदाह पतञ्जलिः—" कण्ठकूपे क्षुत्पिपासानिवृत्तिः " इति । तत्रत्यामृतरूपाय नमः । अवट आधारचक्रं तत्रत्यकुण्डलीरूपेण विराजमानाय नमः ॥ ११ ॥

नमो वर्ष्याय चावर्ष्याय च ॥ १२ ॥

चन्द्रकुण्डलिनीरूपेणामृतं वर्षतीति वर्ष्यः । अग्निकुण्डलिनीरूपेण सूर्यकुण्डलिनीरूपेण वा तच्छोषकत्वादवर्ष्यस्तदुभयरूपाय नमः ॥ १२ ॥

नमो मेघ्याय च विद्युत्याय च ॥ १३ ॥

मेघेषु मेघसदृशनाडीषु भवो मेघ्यः । विद्युज्जठराग्निस्तद्रूपाय नमः । "अहं वैश्वानरो भूत्वा" इति स्मृतेः ॥ १३ ॥

नम ईध्रियाय चाऽऽतप्याय च ॥ १४ ॥

ईध्रं निर्मलत्वेन प्रकाशमानं शुद्धसत्त्वं तत्प्रकाशकाय कारणोपाधये नमः । रजःप्रधानाऽऽवरणशक्तिरातपस्तेन सह वर्तमानाय हिरण्यगर्भरूपाय नमः ॥ १४ ॥

नमो वात्याय च रेष्मियाय च ॥ १५ ॥

वातावरणोपलक्षितो विश्वसमूहस्तपो वात्यो विराट् तस्मै नमः । शर्करापाषाणादिवद्दुस्तरकामकर्मादिगह्वरगविद्याशरीरं रेष्मियस्तद्रूपः । अविद्यारूपेण जीवान्संसारयतीत्यर्थः । तस्मै नमः ॥ १५ ॥

नमो वास्तव्याय च वास्तुपाय च ॥ १६ ।

वस्तूनि शब्दादीनि तद्रूपाय नमः वास्तुः शरीरगृहं तत्पातीति वास्तुपस्तस्मै च नमः ॥ १६ ॥

इति रुद्रभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

---

सप्तमेऽनुवाके मायाविद्योपाधिकावीश्वरजीवावभिधायेदानीं तदुभयाश्रयमनुपाधिकं पूर्णचैतन्यमुपदेष्टुमष्टमोऽनुवाक आरभ्यते—नमः सोमाय चेत्यादिना । तत्रेयं भवति चिन्ता । तद्बीजं तु शुद्धचिन्मात्राश्रिता माया तदवान्तरशक्त्योऽविद्यास्तदुभयोपाधिकौ जीवेश्वराविति वेदान्तिनां प्रक्रिया । तत्र यदि मायाविद्याप्रतिबिम्बावीश्वरजीवौ तदोपाध्योः प्रतिबिम्बपक्षपातितयाऽनुपाधेर्बिम्बभूतचिदात्मनः कालत्रयेऽपि नास्ति संसारः । ओमिति चेत्प्रतिबिम्बयोस्तयोर्मृषात्वेन स्वरूपहानिरेव मोक्ष इत्यापद्येत । किंच मायोपाधेरकर्मजत्वेन नित्यत्वात्तत्संक्रान्तेश्वरस्य ताटस्थ्यमेव स्यात् । ततश्च "क्लेशकर्मविपाकैरपरामृष्टः पुरुषविशेष ईश्वरः" इति योगमतं

तदवस्थमेव भवेत्। तच्च प्रतिषिध्यते। यदि पुनरुपाध्यवच्छिन्नौ तौ घटकाशमहाकाशाविव तदाऽपि व्योम्न इव परिपूर्णस्य चिदात्मनो नह्युपाधिना साकं तत्र तत्र गमनं संभवत्यचलत्वादखण्डत्वाच्च । यदि च शयानस्येव स्वप्नेऽचलस्याप्युपाधिप्रतिबिम्बितत्वेन तत्र तत्र गमनमिष्यते तदाऽपि देशान्तरगतस्य शयनस्थान एव मायाशयनोद्बुद्धस्य स्थानमन्यदेव देशान्तर उपलभ्येत । अपि च तदा बिम्बचैतन्यस्यैव संसारस्तन्मोक्षश्चेति प्रकाशादिवच्च वैशेष्यादिति शारीरकसूत्रविरोध इति चेन्न । शुद्धचैतन्यस्यैव तत्तदुपाध्यवच्छेदेनोभयरूपत्वाङ्गीकारात्। नचोक्तदोषः । यथा वा सवितरि यातायातकारिणीव दृश्यमानेऽपि न स भ्रमति किंतु पृथिवीग्रह एव प्रत्यहं गोलाकारेण भ्रमन्सन्वत्सरान्ते सवितारमेव प्रदक्षिणी कुरुते न सविता । न च पुराणमतविरोधः । "अद्भ्यो वा एष मातरुदेत्यपः सायं प्रविशति" इतिवल्लोकदृष्ट्या मेरुं प्रदक्षिणी कुरुतेऽर्क इति तत्र वर्णनात्। एवमेव सर्वत्र विरोधोऽपनेयः। प्रकृते तु तथाऽचलोऽप्यखण्डोऽपि चिदात्मा प्रातिप्रातिभासिकशरीराध्यासेन जाग्रज्जीवः स्वप्ने दूरदेशमिव व्यावहारिकलिङ्गशरीराध्यासेन स्वर्गनरकादियातायातक्षमो भवति न स्वतः । तद्यथा नौकागमने तत्रस्थानां तीरस्थतरुगमनवत्पृथिवीस्थानामादित्यगमनवत् शयानस्य स्वगमनवदात्मैव गच्छतीति दृश्यते । इदं च प्रागभिहितं ममोपरि चन्द्रो मया साकं पलायत इत्यादिना । एवं च स्वाप्नभ्रमापनये शयनदेशस्थ इव जाग्रत्प्रपञ्चापवादे स्वरूपस्थित एव जीवः । शारीरकसूत्रं तु संनिकर्षादीश्वरस्यापि संसारित्वप्रसङ्गः वारयति । ततश्च घटाकाशमहाकाशव्यवहारवदेकस्यैवोपाधिद्वयेन परमात्मप्रत्यगात्मव्यवहारे सिद्धेऽप्यस्ति विशेषः । ईश्वरो ह्यनादिकालमारभ्य सर्वज्ञत्वान्नित्यमुक्त एव। जीवस्त्वविद्याश्लिष्टः किंचिज्ज्ञ इति संसारी परमेश्वरप्रसादाद्विमुच्यत इति। तदेतदुच्यते—

नम॒ सोमा॑य च रु॒द्राय॑ च ॥ १ ॥

उमा चात्र विद्या शक्तिः। तथा च केनोपनिषदि श्रूयते—"तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति" तयासहितः सोमस्तस्मै नमः । स एव च रुजं संसारं द्रावयतीति रुद्रस्तस्मै च नमः ॥ १ ॥

नमस्ताम्राय चारुणाय च ॥ २ ॥

अयमर्थः । अविशेषेऽपि गुणानां मोहकत्वावरकत्वादिना रजस एव प्राथम्यम् । माया हि स्वगतरजसा प्रथममावृणोति ततस्तमसा विक्षेपयतीति प्रसिद्धम् आवरणमन्तरा विक्षेपायोगात् । अत एव परोरजसे सावदोमित्यादौ रजसः परस्ताद्वर्तमानः परमात्मा परोरजसे कस्तद्यत्परोरजा इति । "एष वाव स परोरजा इति होवाच" इति श्रुत्यन्तराच्च । स च सावर्दो सम्यग्वक्तुं शक्यो वक्तुमशक्यश्च य ओंकारस्तद्रूपः । "वेदैश्च सर्वैरहमेव वेद्य इति" 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतेश्च । सगुणत्वेन वेद्यो निर्गुणत्वेन चाविषय इति फलितोऽर्थः । ततश्च तादृशराजस्या शक्त्या सह वर्तमानस्ताम्रः । तस्मै नमः । सैव शक्तिर्मार्कण्डेयपुराणे महालक्ष्मीरित्यापादिता "सर्वस्याऽऽद्या महालक्ष्मीः" इति । तत्प्राथम्यं चोक्तम् । स एव तामस्या शक्त्या विक्षेपापरनाम्न्या सह वर्तमानोऽरुणो भवति । ईषद्रक्तो भवतीत्यर्थः । महाकालीमिति यामुपादिशन्ति । सेयं शक्तिस्तत्रैवोक्ता । एतदुभयाभिमानी च भगवान् क्रमादुपासनायां ब्रह्मेति विष्णुरिति चोच्यते । ननु विष्णोः कथं तामसत्वमिति चेत् । स्थितेरपि तामसान्तर्गतत्वेन तत्कर्तृत्वादिति ब्रूमः । अत एव "एषा सा वैष्णवी शक्तिर्महाकाली दुरत्यया" इत्युपसंहृतम् । इदमुक्तं भवति—यावद्रजस्तमउद्रेकस्तावज्जन्ममरणात्मकप्रवाहो दुर्निवार्य एव । यदा तु सत्त्वगुणोद्रेकस्तदा सर्वप्रपञ्चोपसंहारः प्रसिद्धो ज्ञानिनाम् । तेन रज एव स्रष्टृ तम एव स्थितिकृत् सत्त्वमेवोपसंहारकमित्यवधेयम् । अन्यत्सर्वं भाक्तमिति ॥ २ ॥

नमः शंगाय च पशुपतये च ॥ ३ ॥

शं मोक्षसुखं गमयति प्रापयतीति शंगः । शुद्धसत्त्वप्रधानोमाख्यविद्याशक्त्या मोक्षदाता यस्तस्मै नमः । पशवः खल्विमे जीवास्तेषां पतिर्यस्तस्मै नमः ॥ ३ ॥

नम उग्राय च भीमाय च ॥ ४ ॥

कामादिरिपुघातित्वादुग्रः । दर्शनमात्रेण तेषां भयहेतुर्भीमः । तस्मै च नमः ॥ ४ ॥

नमो अग्रेवधाय च दूरेवधाय च ॥ ५ ॥

अग्रे वर्तिनमविद्यादोषं हन्तीत्यग्रेवधः । दूरे वर्तिनं तत्कार्यरागादिकं हन्तीति दूरेवधः । तस्मै च नमः ॥ ५ ॥

नमो॑ ह॒न्त्रे च॒ हनी॑यसे च ॥ ६ ॥

केषांचिद्दुर्धराणां स्वतो हन्ता । कांश्चिज्जीवैः कृत्वा हनीयान् । तस्मै च नमः । इमे च मुक्तेः पूर्वाकुशा रिपवस्तन्त्रेषु विवृताः । तन्निरासेन मुक्तिदातेति सकलनामार्थः ॥ ६ ॥

नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यः । ७ ॥

अयमर्थः—" ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः " इति श्रुतिप्रतिपाद्यः संसारवृक्षः प्रत्येकस्मिञ्जीवे तिष्ठतीत्यतोऽस्य वृक्षेभ्य इति बहुत्वव्यपदेशः । अत एव तं गणतनूजो महाशिलायां त्रैलोक्यराज्यं मनसा प्रकल्प्य चिरमनुभवति स्मेति स्मर्यते त्रिपुरारहस्ये ज्ञानखण्डे । योगवासिष्ठेऽपि— " त्रसरेणुदरेऽपीन्द्रः पश्यति स्म जगत्त्रयम् " इत्याद्युक्तम् । ते वृक्षाश्च हरिकेशा इति निरुच्यन्ते : हरयो वेदास्त एव केशाः——पर्णानि येषां ते । छन्दांसि यस्य पर्णानीति स्मृते। ॥ ७ ॥

नम॑स्ता॒राय॑ ॥ ८ ॥

तारयति संसारादिति तारः प्रणवस्तद्रूपाय ॥ ८ ॥

नम॑ः शं॒भवे॑ च मयो॒भवे॑ च ॥ ९ ॥

शं स्वानन्दं भुनक्तीति शंभुः । मयो वैषयिकं सुखं भुनक्तीति मयोभूः । तस्मै तस्मै च नमः ॥ ९ ॥

अत्र शंभुशब्देनोपद्रष्टा साक्षी जीवः । मयोभूशब्देन द्रष्टा भोक्ता च जीव उच्यते । एवं व्यष्टिगतौ निरुच्य समष्टिगतौ तावाह—

नम॑ः शंक॒राय॑ च मयस्क॒राय॑ च ॥ १० ॥

शं परमानन्दं करोति जीवानामिति शंकर ईशसाक्षी । मयः करोतीति मयस्करो विषयसुखदाता ईश्वरः । तस्मै तस्मै च नमः ॥ १० ॥

नम॑ शि॒वाय॑ च शि॒वत॑राय च ॥ ११ ॥

शिवाय साक्षित्वानाक्रान्तशुद्धप्रत्यक्चैतन्यस्वरूपाय । तथा शिवतरायेशसाक्षित्वानाक्रान्तशुद्धपरमात्मस्वरूपाय ॥ ११ ॥

नमस्तीर्थ्याय च कूल्याय च ॥ १२ ॥

तीर्थ्याय तीर्थं गुरुस्तद्रूपाय । एवं " उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः " । इति समष्टिव्यष्टिगतं षड्विधं चैतन्यं निरुच्य तस्यैव माहात्म्यातिशयमाविष्करोति । संसारसमुद्रस्य कूले तीरे तिष्ठतीति कूल्यः ॥ १२ ॥

नमः पार्याय चावार्याय च ॥ १३ ॥

तस्यैव पारे तिष्ठतीति पार्यः । अवरस्मिन्भागे तिष्ठतीत्यवार्यः । अत्र स्वयमसंसारिस्वरूपेण तिष्ठन्परतीरस्थान्मुक्तानपरतीरस्थान्मुमुक्षूंश्च पातीति पदत्रयस्यार्थः ॥ १३ ॥

न केवलं मुक्तमुमुक्षुमात्रत्राता किंतु भवजलधिमग्नान्संसारिणश्च—

नमः प्रतरणाय चोत्तरणाय च ॥ १४ ॥

प्रकर्षेण तारयतीति प्रतरणः । किंचिद्विचारेण उद्धारेच्छून् उत्तारयति तस्मै नमः ॥ १४ ॥

यद्यपि निरुपाधिकदयापरवशतया जीवाननुगृह्णाति भगवांस्तथाऽपि जीवैर्भवसमुद्रनाविकाय किंचिन्मूल्यं देयमेवेत्याशयेनाऽऽह—

नम आतार्याय चाऽऽलाद्याय च ॥ १५ ॥

आतरस्तरपण्यमर्हतीत्यातर्यः । आतर्य एव आतार्यः । तस्मै नमः । स चाऽऽतरः " पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति " इत्युपलक्षणः । तथा—अरं शीघ्रमदन्तीत्यलादाः । रलयोः सावर्ण्यात् । अलादेषु मुख्य आलाद्यः। तस्मै नमः । भक्तोपहृतं वस्तु शीघ्रं प्रेम्णोपहारी करोति परमेश्वरः । " तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः " इति तत्रैवोक्तेः ॥ १५ ॥

एवं शिव एव पञ्चदेवतात्मा भक्ताननुगृह्णातीत्याह—

नमः शष्प्याय च फेन्याय च ॥ १६ ॥

शष्पाणि दूर्वादितृणान्यर्हतीति शष्प्यस्तस्मै विनायकस्वरूपाय । फेनोपलक्षितं क्षीरमर्हतीति फेन्यः सूर्यस्तद्रूपाय । आदित्यो हि सफेनक्षीरेण प्रसीदतीति प्रसिद्धम् ॥ १६ ॥

नमः सिकत्याय च प्रवाह्याय च ॥ १७ ॥

रथसप्तम्यां सिकतामयमूर्ताबाविर्भवतीति सिकत्यो भद्रकालीरूपस्तस्मै नमः । "आनर्चुर्नृप सैकतीम्" इति भागवतादौ तथा प्रसिद्धेः । यथा शिवस्तथा देवी यथा देवी तथा शिवः । नानयोरन्तरं किंचिच्चन्द्रचन्द्रिकयोरिव । इति शिवस्यापि देवीरूपत्वं प्रसिद्धम् । प्रवाहे जलपूरे पूज्यः प्रवाह्यो विष्णुस्तद्रूपाय । तस्य हि नारायणस्याऽऽपोमयत्वं प्रसिद्धम् । "आपो नारा इति प्रोक्ताः" इति स्मृत्यादौ । तस्मै नमः ॥ १७ ॥

इति रुद्रभाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

---

अष्टमेऽनुवाके निरुपाधिपूर्णचैतन्यमुपदिश्य तस्यैव सर्वगतत्वं चोपदेष्टुं नवमोऽनुवाक आरभ्यते । तत्राऽऽदौ स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित्" इत्यादिश्रुत्या "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्यन्तरेण च परमात्मैव तत्तदुपाधिवशाज्जीवेश्वरादिसंज्ञां लभते । यश्च सर्वज्ञत्वादिधर्मभेद इवाऽऽभाति स चोपाधिनिबन्धन इत्युपाधेरेव धर्मस्तत्पक्षपातदशायां चिदात्मन एव जीव इतीश्वर इति च व्यवहारः । इदं च संप्रज्ञातसमाधावुदासीनबोधरूपतयाऽवस्थाने स्पष्टमनुभूयते । कारणोपाधिः कार्योपाधिं नियच्छतीति न चिन्मात्रवस्तुनो नियन्तृत्वं नियम्यत्वं वा । अत एव कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः । "कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते" इति पञ्चदश्यां कार्यकारणोपाध्योरेव जीवेश्वरव्यवहारः कृतः । ननु यथा, नियम्यत्वं स्वोपाधेरन्तःकरणस्य जीवेनानुभूयते तथा कारणोपाध्यवस्थाने नियन्तृत्वं कुतो नानुभूयत इति चेदुच्यते । यथा वा चक्षुष्मताऽपि स्वमुखस्थं तिलकादि चिह्नं दर्पणाद्युपाधावेव निरीक्ष्यते न तमन्तरा मुख एव । एवं कारणोपाधिमान्बिम्बस्थानीयः साक्षी स्वनियन्तृत्वं न स्वस्मिन्नुपलभते किंतु दर्पणस्थानीये लिङ्गशरीर एव । बिम्बोपाधौ च भवितव्यानुसारेण संस्कारा उत्पद्यन्ते । त एव स्थूलीभूता वासनारूपेणान्तःकरणोपाधावनुभूयन्ते । सूक्ष्मं ह्युपनेत्रमहिम्ना स्थूलतया प्रतीयत इति प्रसिद्धम् । ननु तर्हि नास्ति सार्वज्ञ्यानुभव इति चेत्—ओमिति वदामः । अत एव "संस्काराणां परोक्षत्वात्सर्वज्ञत्वं न हीयते" इत्यभियुक्तचरणाः ।

ननु कथं तर्हि " यः सर्वज्ञः स सर्ववित् " इति श्रुतिप्रलाप इति चेदानुमानिक इति ब्रूमः । तथा हि ईश्वरो हि सर्वसाक्षी सर्वसाधारणस्तदुपाधेरपि सर्वसत्त्वधारणत्वेऽपि तत्तदन्तःकरणावच्छेदेन संस्काराणां भेदसद्भावाद्भवितव्यानुसारेण तत्तज्जीवनियामकत्वं घटते जीवोपाधीनां च प्रतिदेहं भिन्नानां नियम्यत्वम् । अत एव " यो अस्याध्यक्षः परमे व्योमन्सोऽप्यङ्ग वेद यदि वा न वेद " यदि वा न वेद " इति श्रुतिरपि सार्वज्ञ्यमानुमानिकमेवाऽऽह । नचैवं सांख्यमतप्रवेश इति वाच्यम् । चिद्विशिष्टया एव प्रकृतेः सार्वज्ञ्याभ्युपगमात् । ततश्च विशुद्धसत्त्वप्रधाना माया शरीरान्तर्वर्तिसंस्कारप्रकाशकत्वेन वर्तमानोऽपि चिदात्मा स्वतो ज्ञातृत्वायोगादन्तःकरणवैशिष्ट्येनैव तज्जानाति । अतोऽन्तःकरणस्य प्रवर्तकः स्वयमेवेति नान्यः कश्चिदपराध्यति । एवं चेश्वर एव स्वरूपविस्मृत्या जीवो भवतीति निर्विवादम् । स च कथं देहमाविश्य जीवतामुपैतीत्यत आह—

नम॑ इरि॒ण्या॑य च प्रप॒थ्या॑य च ॥ १ ॥

इरणं ब्रह्मरन्ध्रं तत्र प्रकाशगान इरिण्यः । तस्मै नमः । प्रपथाः "शतं चैका हृदयस्य नाड्यः " इति श्रुत्युक्ता नाडीमार्गास्तेषु प्रचरति जीवरूपेणेति प्रपथ्यः । तस्मै नमः । ईश्वरो ह्यज्ञानावृतः प्रथमं ब्रह्मरन्ध्रं प्रविश्य पश्चात्प्रविशति हृदय्या नाडीः । तथा च श्रुतिः—" स एतमेव सीमानं विदार्य हृदयमेवान्ववक्रामति " इति ॥ १ ॥

नमः॑ किꣳशि॒लाय॑ च॒ क्षय॑णाय च ॥ २ ॥

कुत्सितं शिलं किंशिलं नानावासनात्मकं रजस्तदन्वितः किंशिलः । तस्मै । ततश्च देहरूपो निवासस्तस्मिन्नहं ममेत्यभिमानेन निवसतीति क्षयणः । तस्मै नमः ॥ २ ॥

एवं देहाध्यासवतस्तस्यैव बाह्यस्त्रीपुत्राद्यनन्तवासनान्वितत्वमाह—

नमः॑ कप॒र्दिने॑ च पु॒लस्त॑ये च । ३ ॥

केशादिवत्सूक्ष्मतमवासनासमूहः कपर्दस्तद्वते पुरोवर्तीनि नानाकर्माणि श्रौतस्मार्तलौकिकानि स्त्यायति संघातयति संचिनोतीति यावत् । स पुलस्तिस्तस्मै । रलयोरभेदात् । नम इत्यर्थः ॥ ३ ॥

इदानीं जीवभावापन्नस्य स्थानविशेषानाह—

नमो गोष्ठ्या॑य च गृह्या॑य च ॥ ४ ॥

श्रुतयो गावस्तासां स्थानं गोष्ठं मनोमयकोशस्तत्र प्रकाशमानो गोष्ठ्यस्तस्मै नमः। मनोमयस्य हि "तस्य यजुरेव शिरः। ऋग् दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा" इत्यादौ वेदयत्वं श्रूयते। गृहं गृहिणीस्थानं बुद्धिरेव गृहिणी विज्ञानमयकोशस्तत्र संचरमाणो गृह्यस्तस्मै नमः। विज्ञानमयाविष्कृत एव जीवो विधिनिषेधाधिकारी कर्मकर्ता च भवति। "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतेः। कर्ता शास्त्रार्थवत्त्वादिति सूत्राच्च ॥ ४ ॥

नमस्तल्प्या॑य च गेह्या॑य च ॥ ५ ॥

तल्पं शयनमहंकारः। शय्यामहं द्वादशमेक आहुरिति भागवतोक्तेः। तत्र स्थितस्तल्प्यस्तस्मै नमः। द्वे हि जीवस्य गेहे। एकं कर्माशयरूपं बुद्धिः। अपरं भाविचिन्तकं चित्तम्। तच्च देहाद्बहिरिव भवति। आरामस्थगेहवत्। तत्र रममाणाय त्रैकालिकज्ञानसंपन्नाय गेह्याय नमः। तथा च श्रुतिः—"आराममस्य पश्यन्ति न तं पश्यति कश्चन" इति। त्रैकालिकज्ञानसंपन्ना अपि तत्त्वविदो न भवन्तीति श्रुत्यर्थः ॥ ५ ॥

एवं देहाभिमानवत आश्रमनिष्ठामनुवदति-

नमः॒ काट्या॑य च ग॑ह्वरे॒ष्ठाय॑ च ॥ ६ ॥

कटस्तृणादिनिर्मितासनं तत्र तिष्ठतीति काट्यः संन्यासधर्मी तस्मै नमः। गह्वरे गुहायां तिष्ठतीति गह्वरेष्ठः। वानप्रस्थधर्मी तस्मै नमः। वानप्रस्था अग्निरक्षणार्थं गुहादीनाश्रयन्त इति प्रसिद्धम्। अग्न्यर्थमेव शरणमुटजं वाऽद्रिकंदरमिति भागवतोक्तेः ॥ ६ ॥

नमो॑ ह्रद॒य्या॑य च निवे॒ष्प्या॑य च ॥ ॥

ह्रदवदगाधे संसारे तिष्ठतीति ह्रदय्यस्तस्मै गृहाश्रमिणे नमः। नितरां वेषो निवेषो नैष्ठिकब्रह्मचर्यं तत्पान्तीति निवेष्पास्तेषु मुख्यो निवेष्प्यस्तस्मै नमः। षकाराकारविश्लेषश्छान्दसः ॥ ७ ॥

एवं सर्वगतत्वमुपपाद्य सर्वदेवतात्मत्वमुपदिशति—

नमः॒ पा॑ꣳसव्या॑य च रज॒स्या॑य च ॥ ८ ॥

पांसवः सदोषकर्माणि श्येनेनाभिचरन्यजेतेति श्रुतिप्रसिद्धान्याभिचारिकाणि तेषु प्रवृत्तः पांसव्यस्तस्मै नमः। एवं रजःप्रधानानि काम्यान्यग्निहोत्रादीनि तत्र प्रवृत्तो रजस्यस्तस्मै नमः ॥ ८ ॥

तत्र ये कर्मणा देवानपि यन्तीति श्रुत्यनुसारेण देवाः पापकर्मणा पुण्यकर्मणा च द्विविधा भवन्ति। तत्राऽऽद्यानाह—

नमः॒ शुष्क्या॑य च हरि॒त्या॑य च ॥ ९ ॥

शुष्के शून्यश्मशानादौ क्रीडतीति शुष्क्यो भूतप्रेतपिशाचादिरूपस्तस्मै नमः। अत्र सर्वत्रोपाध्यविवक्षयोपाहितचैतन्याय नम इति विवक्षितम्। हरिते सस्यवति रम्ये भूभागे तिष्ठतीति हरित्यो वनदेवतास्थलदेवतादिरूपस्तस्मै नमः ॥ ९ ॥

नमो॒ लोप्या॑य चोल॒प्या॑य च ॥ १० ॥

लुप्यते तृणादिकं यस्मिंस्तल्लुप्यमुदकं तस्मिंस्तिष्ठतीति जलदेवतादिस्वरूपस्तस्मै नमः। उलपा लतास्तास्वप्सरसां रूपेण तिष्ठतीत्युलप्यस्तस्मै नमः तदुक्तं कात्यायनीतन्त्रे—" मालत्यामुर्वशी देवी जातौ वसति मेनका। यूथिकायां पूर्वचित्तिर्मल्लिकायां तिलोत्तमा ॥ १ ॥ सुकेशी मधुमालत्यां रम्भा जूत्यां प्रतिष्ठिता। बटुमल्यां मञ्जुघोषा प्रम्लोचा मगपल्लिकाम् ॥ २ ॥ वासन्त्यां बसते रम्भा कस्तूर्यां पुञ्जकस्थली " इत्यादिना ॥ १० ॥

नम॑ ऊ॒र्व्या॑य च सू॒र्म्या॑य च ॥ ११ ॥

ऊर्वी पृथ्वी तत्रत्यमनुष्यपशुपक्ष्यादिरूपाय नमः। सूर्म्यः शोभनलहर्यः। तत्रत्यमीनकूर्मादिजलचररूपाय नमः ॥ ११ ॥

नमः॑ प॒र्ण्या॑य च पर्णश॒द्या॑य च ॥ १२ ॥

पर्णेषु सूक्ष्मकृमिरूपेण वर्तमानः पर्ण्यस्तस्मै नमः। पर्णशदः पर्णरसस्तद्रूपाय ॥ १२ ॥

नमो॑ऽपगु॒रमा॑णाय चाभिघ्न॒ते च ॥ १३ ॥

अपगुरतेऽसावमगुरमाणस्तस्मै व्याघ्रसिंहादिरूपाय नमः। स एवाभितो हन्तीत्यभिघ्नंस्तस्मै नमः ॥ १३ ॥

नम॑ आक्खिद॒ते च॑ प्रक्खिद॒ते च॑ ॥ १४ ॥

आसमन्तात्खेदयतीत्याक्खिदन्रोगदैन्यादिरूपस्तस्मै नमः । प्रकर्षेण खेदयतीति प्रक्खिदन्मृत्युरूपस्तस्मै नमः ॥ १४ ॥

एवं " दूरेहेतिर्मृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसः " इति श्रुत्यनुसारेणोपदिश्यैदानीं सर्वान्तर्यामिणमुद्दिश्य प्रणमति—

**नमो॑ वः किरि॒केभ्यो॑ दे॒वाना॒ꣳ हृद॑येभ्यः ॥ १५ ॥**

अत्रेयं भवति चिन्ता । तद्बीजं त्वेकवचनं विहायाकस्माद्बहुवचनप्रयोगादन्तर्यामिनानात्वप्रतीतेः । " एकं सन्तं बहुधा कल्पयन्ति, एकं सद्बहुधा विचारः, द्यावाभूमी जनयन्देव एकः " इत्येवंजातीयका श्रुतिस्तु तस्य नानात्वं वारयति । सत्यम् । तथाऽपि तत्तदन्तःकरणोपाध्यवच्छेदेन तस्यापि नानात्वाङ्गीकारात् । तदुक्तं वेदान्तपरिभाषायाम्—" अयं च साक्षी नाना । एकत्वे चैत्रावगते मैत्रस्याप्यनुसंधानप्रसङ्गः " इति । इदमत्र तत्त्वम्—" दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः " इत्यादिश्रुतिषु स्वमहिमप्रतिष्ठ एक एव परमात्मा मायावी श्रूयते । " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इत्येवमादिषु । सा च माया शक्तिद्वयवती विशुद्धसत्त्वप्रधाना जगत्सर्जनादिसंस्कारवैशिष्ट्येन तस्य महेश्वरत्वं विदधाना तत्तदन्तःकरणोपाधिप्रतिबिम्बितजीवकृतशुभाशुभकर्मसंस्काराशयभेदेन बिम्बतामन्तर्यामितां च विधत्ते । तत्रान्तःकरणानां प्रतिदेहं भिन्नत्वात्तत्प्रतिफलितजीवचैतन्यस्य बिम्बस्थानीयः साक्षी प्रत्यगात्मा तत्तत्प्रारब्धसंस्कारावच्छेदेन भिन्न इव प्रतीयते । प्रेर्यप्रेरकत्वधर्मभेदात् । इदमेवाभिप्रेत्य " यथैकस्मिन्घटाकाशे रजोधूमादिभिर्वृते । न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः " इति गौडपादाचार्यैरुक्तम् । ततश्च यदीयान्तःकरणं सद्विचारेण निरस्तावरणं सत्त्वोत्कर्षवशाद्विद्यारूपेण परिणमते तत्साक्ष्यपि सत्त्वपुरुषान्यताख्यातिकारिण्या विद्यावृत्त्या साक्ष्यमिथ्यात्वानुसंधानेन साक्षितामप्यपहाय शुद्धपरमात्मस्वरूपेणावतिष्ठते । तदुक्तं गौडपादैः—" अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमात्मानं बुध्यते तदा " इति । ततश्चेश्वरत्वं द्विविधम् । अन्तःकरणमात्रप्रेरकत्वं पृथ्वीसूर्यादिसकलजगत्प्रेरकत्वं चेति । तत्र प्रथमं स्वानुभवगोचरम् । अहमिदं प्रेरयामीति साक्षिणः प्रतीतिविषयत्वात् । द्वितीयं तु परप्रतीतिगोचरम् । अन्यथा मुक्तावपि जगद्भानप्रसङ्गः । तत्प्रागेवावोचाम " अविज्ञातानुकूला च माया द्वैतं कथं

भवेत् ” इत्यादिना । ततश्चान्तःकरणसाक्षिणामुपाध्यवच्छेदेन भेदप्रत्ययादुपपन्नत एव बहुवचनं नमो व इति । शुभाशुभवासनाः सुखदुःखानि वा किरन्ति वर्षन्ति ते किरिकास्तेभ्यो देवानां जीवानां हृदयेभ्योऽन्तर्यामिभ्यो नमः । “ दैवी ह्येषा गुणमयी मम माया दुरत्यया ” इत्यादौ दैवी माया मम मायेति च भेदव्यपदेशात्तत्र देवशब्देन जीवग्रहणात् ॥ १५ ॥

नमो विक्षीणकेभ्यः ॥१६॥

तानि च सुखदुःखानि विशेषतो भोक्तृत्वेन क्षपयन्तीति विक्षीणकाः । तेभ्यो नमः ॥ १६ ॥

नमो विचिन्वत्केभ्यः ॥ १७ ॥

विशेषेण धर्माधर्मौ विचिन्वन्तीति विचिन्वत्कास्तेभ्यो नमः ॥ १७ ॥

नम आनिर्हतेभ्यः ॥ १८ ॥

आसमन्तान्निर्हरन्ति गोपायन्ति धर्माधर्मसंस्कारानित्यानिर्हतास्तेभ्यो नमः ॥ १८ ॥

नम आमीवत्केभ्यः ॥ १९ ॥

अमीवमनात्माध्यासेनाऽऽत्मापह्नवरूपं पापं तद्वन्त आमीवत्कास्तेभ्यो नमः । एतादृशपापनिवृत्तिरेव श्रेय इति भावः । इदमत्रावधेयम् । साविद्यस्यान्तःकरणस्य पञ्च भेदाः । मनो बुद्धिरहंकारश्चित्तमज्ञानमेव च । अन्तःकरणभेदाः स्युर्जीवस्तु तदुपाधिमान् । इति त्रिपुरारहस्योक्तेः । तत्र नानाविषयभोगजन्यसंस्कारसंग्राहकं मनस्तदुपाधिका विचिन्वत्काः । बुद्धिस्तु तत्तद्भोगेन प्रारब्धं क्षपयति तदुपाधिका विक्षीणकाः । अहंकारस्तु पुनः पुनर्दुःखानि वर्षति तदुपाधिका विकिरिकाः । चित्तं तु शरज्जलपङ्कमिव भुक्तसंस्कारान्गोपायतीति तदुपाधिका आनिर्हताः । अज्ञानं ह्यनात्माध्यासेनाऽऽत्मापह्नवं करोतीति तदुपाधिका आवीवत्काः । इति विवेकः ॥ १९ ॥

इति रुद्रभाष्ये नवयोऽनुवाकः ॥ ९ ॥

---

नवमेऽनुवाक औपाधिकमन्तर्यामिनानात्वं प्रतिपाद्येदानीमन्तर्यामिसमष्टिरूपः सर्वान्तर्यामी परमेश्वरः स्तूयते—

द्रापे अन्धसस्पते दरिद्रन्नीललोहित ।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो
एषां किंचनाऽऽममत् ॥ १ ॥

किमेष निरुपाधिकः स्तूयते सोपाधिको वा। नाऽऽद्यः। तस्य मनोवागविषयत्वेन स्तुतिगोचरत्वाभावात्। द्वितीयेऽपि किं जीव ईश्वरो वा। नाऽऽद्यः। स्तोतुरेव स्तव्यत्वमिति कर्मकर्तृविरोधापातात्। द्वितीयपक्षेऽपि किं त्रिनेत्रत्वशशिशेखरत्वादिविशिष्टव्यक्तिविशेषः कैलासवासी श्रीरुद्र आहोस्विद्विशुद्धसत्त्वप्रधानमायोपाधिरीश्वरः। नाऽऽद्यः। यथाश्रुते तथा प्रतीयमानत्वेऽप्यध्यात्मपरतया पदयोजने तथाऽप्रतीतेः। "एकं सन्तं बहुधा कल्पयन्ति" इत्येवमादिश्रुतिषु मायोपाधेरीश्वरस्यैव सर्वस्तव्यमूर्धाभिषिक्तत्वेन प्रतिपादनात्। तस्मात्स एवात्र स्तव्य इति सिद्धम्। पदयोजनायां तु द्रापयति सांसारिकदुःखानि द्रावयतीति द्रापिस्तत्संबुद्धौ हे द्रापे हे मुक्तिप्रद। हे अन्धसस्पते हे अन्नपते। अन्नस्यैव कामजनकत्वात्। हे कामप्रद इत्यर्थः। दरि दारिद्र्यं द्रावयतीति दरिद्रत्। हे णर्थदायिन्। कण्ठे नीलोऽन्यत्र लोहित इति नीललोहितो धर्मप्रदः। धर्मस्य च काम्यत्वेन नित्यत्वेन च द्विस्वरूपत्वात्। अनेन चतुर्विधपुरुषार्थप्रदत्वं रुद्रस्य सिद्धम्। ननु यथाश्रुतार्थं विहाय क्लिष्टकल्पनयाऽध्यात्मपरतया योजने किं प्रयोजनमिति चेदुच्यते। यथाश्रुते स्तेनानां स्तायूनामारण्यानां मुष्णतां प्रकृन्तानां कुलुञ्चानां पतये नम इत्यादिपदार्थालोचने रुद्रस्य महत्त्वभङ्गः स्वारस्यभङ्ग उपासकानामानन्दभङ्गश्च तदवस्थः स्यात्। तथाऽस्यद्भ्यो विध्यद्भ्य आसीनेभ्यः शयानेभ्यस्तिष्ठद्भ्यो धावद्भ्य इत्यादीनां च स्वभावोक्त्यनुकारमात्रत्वेन तथा तक्षभ्यो रथकारेभ्यः कुलालेभ्यः कर्मारेभ्यश्च वो नम इत्यादीनां तत्तज्जात्यनुवादेन स्तुतिर्वा निन्दा वेति संदेहास्पदत्वेव स्यात्। न च सार्वात्म्यवर्णनाददोष इति वाच्यम्। सत्यम्। सार्वात्म्यवर्णने हि सामान्यवचनं भवति। यः पृथिव्यां तिष्ठन्पृथिव्या आन्तर इति सामान्येनापि तत्सिद्धेः। यथा वृक्षरूप इत्युक्तौ पुष्पफलादिरूपत्वमर्थत आपन्नम्। इह तु वृक्षेभ्यो हरिकेशेभ्य इत्युक्त्वा पुनः पर्णेभ्य पर्णशद्येभ्य इति विशिष्य प्रतिपादनमनर्थकमिव प्रतीयते। स्तुतिश्च द्विविधा यथार्थाऽयथार्था चेति। तत्र स्तोतव्यवस्तुनि विद्यमानानामेव गुणानां वर्णनं यथार्था। यथा यो रुद्रो अग्नौ

यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु । यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" इत्यादि । अविद्यमानानां गुणानां वर्णनमयथार्था । यथा कंचन राजानमुद्दिश्य—" इन्द्रोपमोऽसि वरुणोऽसि हुताशनोऽसीत्यादिरूपा । न तावन्निरवद्ये परमेश्वरे तस्करादिधर्माः स्तुतिगोचरतया युज्यन्ते । किंचोपाधिधर्मास्ते यद्युपहितेऽपि प्रयुज्यन्ते तर्ह्यध्यारोप एव स्यान्न स्तुतिः । इष्टापत्तिरिति चेत् । हन्त तर्ह्यध्यारोपापवादप्रक्रिययाऽध्यात्मपरमेव शतरुद्रीयमित्यापद्यते । किंच सर्वोऽपि वेदोऽध्यात्मपर एवेति वदामः । भ्रान्ताः खलु मीमांसकास्तस्य कर्मपरतां वर्णयन्ति । वस्तुतस्त्वध्यासपरमेव कर्मकाण्डम् । तथा हि—पञ्च वा एतेऽग्नयो यच्चितय इत्यनुसारेण चित्याग्निषु विधीयमानाः पञ्चैव तत्पशुयागाः "अजमेधोऽश्वमेधो रासभमेधो गोमेधः पुरुषमेधः" इति । अत्र लोभकामक्रोधमोहमदा यथाक्रमं पशवः । तत्राजो हि स्वयं कण्टकादिभिरुदरनिर्वाहं कुर्वन् दीक्षितामुपकरोति । एवं वित्तसंचयी लोभी स्वयं दैन्येन वर्तयन्मरणोत्तरमन्यस्मै कस्मैचिद्दत्त इत्यजसाम्याल्लोभस्याजत्वम् । तज्जये तु त्रिकालज्ञानमुपतिष्ठते । एवं क्रोधी—अन्धं तमः प्रविष्ट इवाविवेकी मातरं पितरं वा हन्यादिति रासभतुल्यः । तज्जये त्वायुर्विद्योपतिष्ठते । कामी—अश्वतुल्यः । अश्वस्यैव नरत्वप्रसिद्धेः । तज्जये तु ब्रह्मविद्योपतिष्ठते । ततश्च ब्रह्महत्या निवर्तते । तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेति । कामो हि प्राधान्येन ब्रह्मज्ञानप्रतिबन्धकः । " आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा " इति गीतोक्तेः । तथा " एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना । जहि शत्रुं महाबाहो कामरूपं दुरासदम् " इति तत्रैवोपसंहाराच्च । एवं " इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्न्ये नामानि " इति श्रुतौ गौर्वाग्रूपिणी परोक्षवादेन मुग्धान्मोहयतीति गौर्मोहरूपा । तन्मेधे नग्ना वधूरिव सर्वाऽपि विद्या, अनावृतैव बुद्धौ प्रकाशते । " जायेव पत्य उशती सुवासाः " इति श्रुत्यन्तरात् । एवं मदोऽहंकारः स एव पुरुषोपाधित्वात्पुरुषस्तन्मेधे स्वयं प्रत्यगात्मस्वरूपेणाऽऽविर्भवति । " अस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते । आवृत्तौ तु विनष्टायां भेदे भाते प्रयाति तत् " इत्याचार्योक्तेः । एवमध्यात्मरीत्या वास्तवार्थं परित्यज्य यथाश्रुतमनुतिष्ठतां नरक एव । अस्त्वेतत्प्रकृतमनुसरामः । हे भगवन् एषां पुरुषाणां जीवानामेषां पशूनां तत्प्रवर्तकानां मनआदीन्द्रियाणां मा भेः भयं मा कुरु । मा अरः ।

मा हिंसीः। एषां मध्ये किंचन मो मा अममत् म्रियताम् । अत्रेन्द्रियनाशे जीवनाशः । देहनाश इन्द्रियनाश इति स मा भूदित्यर्थः । "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिश्रुत्या तवैव सर्वान्तर्यामित्वेन प्रवर्तकत्वोपपादनात् ॥ १ ॥

अज्ञानावृतज्ञानत्वेन मृता इव जीवा ज्ञानदानेन त्वयैव जीव्यन्त इत्याशयेन द्वितीयामृचमाह—

या ते रुद्र शिवा तनूः शिवा विश्वाहभे-
षजी । शिवा रुद्रस्य भेषजी तया नो मृड
जीवसे ॥ २ ॥

द्वे हि परमेश्वरस्य तनू । रक्षकत्वादेका शिवा । संहारकत्वादन्या घोरा तत्र हे रुद्र या ते शिवा शुद्धसत्त्वोपाधिका तनुरस्ति सा शिवा मोक्षदायिनी भवरोगार्तानां विश्वाहस्सु सर्वदैव भेषजी भेषजवत्सद्यो रोगनिवर्तिका । तस्यैव रुद्रस्य या घोरा कामकश्मला तनूः साऽपि शिवा विषयिणां स्वर्गादिफलदातृत्वेन मनसो दैन्यप्रयुक्तखेदादिरोग निवर्तिका । अत एव एव साऽपि भेषजी पुण्यक्षयेण स्वर्गाद्यैश्वर्यभ्रंशदर्शनात्पुनरपि रोगप्राप्त्या नात्यन्तनिवर्तिकाऽतो वस्तुतस्तस्या घोरत्वम् । हे मृड विश्वाहभेषज्या तया तनुवा नोऽस्माञ्जीवसे जीवयसे । यलोपश्छान्दसः ॥ २ ॥

इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय
प्रभरामहे मतिम् । यथा नः शमसद्द्विपदे
चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्
॥ ३ ॥

तवसे तवीयसे कर्मानुरूपफलदात्रे कपर्दिने तपस्विने "यस्य ज्ञानमयं तपः" इति श्रुतेः । क्षयन्तः क्षयं प्राप्नुवन्तो वीराः कामादयो यस्मात्तस्मै क्षयद्वीराय रुद्राय परमशिवायेमां मतिं प्रभरामहे नमस्तुतिसमन्वितां बुद्धिं समर्पयामः । यथा येन बुद्धिसमर्पणेन द्विपदे विद्याविद्यारूपकारणशरीराय चतुष्पदे मनोबुद्ध्यहंकार-

चित्तचतुष्टयरूपिणेऽन्तःकरणाय शमसत्सुखं भवेत् । तथाऽस्मिन्ग्रामे देहे विश्वं सर्वमिन्द्रियप्राणाद्यपि पुष्टं सर्वशक्तिसमन्वितमनातुरं कार्यक्षमं च स्यात्।। ३ ॥

मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय
नमसा विधेम ते । यच्छं च योश्च मनुरा-
यजे पिता तदश्याम तव रुद्र प्रणीतौ ॥४॥

हे मृड हे रुद्र उत अपि च नोऽस्माकमयस्कृधि सुखं कुरु । संबुद्धिद्वयं घोराघोरतन्वभिप्रायम् । न केवलमुपाधिभ्यस्तदभिमानिभ्योऽस्माकमपि सुखं कुर्वित्यभिप्रायेणोतशब्दः । ननु मया किमर्थमेवं कर्तव्यमित्यपेक्षायामाह—क्षयद्वीराय ते तुभ्यं नमसा विधेम नमस्कारैः सेवां करवाम । अस्मत्पिता मनुर्येन वयं मानवा इति प्रसिद्धाः । यत् शं सुखसाधनं त्वत्परिचर्यादिरूपं योरित्यव्ययं प्राक्कर्मकृत-वान्वि तदुभयमायजे संपादितवान् । हे रुद्र तव प्रणीतौ तदश्याम प्राप्नुमः । वस्तु-तस्त्वात्मानात्मविचाररूपं “ श्रोतव्यो मन्तव्यः ” इत्यादिनाऽऽयजे । तव प्रणीतौ तदेवाश्याम किं क्षुल्लककर्माचरणेनेति भावः ॥ ४ ॥

मा नो महान्तमुत मा नो अर्भकं मा न
उक्षन्तमुत मा न उक्षितम् । मा नो वधीः
पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र
रीरिषः ॥ ५ ॥

नोऽस्माकं मध्ये यो महानात्मा “ स वा एष महानज आत्मा ” इति श्रुतेः । तं मा वधीः । अविद्यादोषेण मा तिरोहितं कुरु । उत नोऽर्भकः बालवदन्नमात्रोपजीवी पराधीनश्च देहस्तं मा वधीः । उक्षति सिञ्चति वीर्यं चिदाभास-रूपमित्युक्षन् साक्षी तं मा वधीः । “ साक्षिणः पुरतो भातं लिङ्गदेहेन संयुतम् । चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ” इत्युक्तेः । उक्षितं चिदाभासं मा हिंसीः । नोऽस्माकं पितरं प्राणं मातरमपानं च मा वधीः । “ ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितरः ” इति श्रुतेः । तत्र दक्षः प्राणः । “ प्राणो वै दक्षः ” इति श्रुत्यन्तरात् । प्राणस्य पितृत्वे तदितरस्य मातृत्वमर्थसिद्धम् । तथा हे रुद्र नः प्रियास्तनुवः शमदमादिवृत्तयो मा रीरिषः । कामादिदोषेण मा तिरोहिताः कुर्वित्यर्थः ॥ ५ ॥

मा नस्तोके तनये मा न आयुषि मानो
गोषु मा नो अश्वेषु रीरिषः । वीरान्मा
नो रुद्र भामितो वधीर्हविष्मन्तो नमसा
विधेम ते ॥ ६ ॥

नोऽस्माकं तोके तनयेऽत्यल्पबालवद् गुरुप्रसादादधुनैवोत्पन्ने ज्ञानाङ्कुरे तथाऽऽयुर्वत्सर्वतो रक्षके बुद्धितत्त्वे नो गोषु वाक्षु नोऽश्वेषु मनःसु मा रीरिषः, मा हिंसीः । रुद्र हे शिव भामितः, अत्यन्तं क्रुद्धः सन् नो वीरान्परमबलवतो वैराग्यादीन्मा वधीः । यतो वयं हविष्मन्तः श्रवणमननादिहविर्युक्ताः सन्तस्ते त्वां नमसा नमस्कारेण विधेम परिचरेम । कुपितोऽहि नमस्कारैरेव शाम्यति । तथा च श्रुतिः- " रुद्रो वा एष यदग्निः स यथा व्याघ्र इत्युपक्रम्य नमस्कारैरेवैनं शमयति " इत्युपसंहृतम् ॥ ६ ॥

आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्न-
मस्मे ते अस्तु । रक्षा च नो अधि च देव
ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः ॥ ७ ॥

गोघ्ने पशुघातकाय पुरुषघ्ने जीवहिंसकाय क्षयद्वीराय त आराद्दूरादेव नमोऽस्तु । अस्मे अस्माकं तु सुम्नं कल्याणमस्त्विति यथाश्रुते । वस्तुतस्तु विधिनिषेधातीतत्वेन गाः श्रुतिवाचो हन्तीति गोघ्नः परमहंसस्तद्रूपाय । एवं पूरुषं पुरुषोपाधिमहंकारं हन्तीति पूरुषघ्नस्तस्मै । क्षयद्वीराय कामादिरिपुनाशकाय । आरात्समीपे नमोऽस्त्वित्यध्याहारः । " यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात् " इति श्रुत्यन्तरात् । हे देव नो रक्षा यथा स्यात्तथाऽधिब्रूहि । तथा नः शर्म यथा भवेत्तथाऽधिब्रूहि । यद्वा नोऽधिरक्ष योगक्षेमं निर्वह । नोऽधिब्रूहि । त्वदादरेण सर्वमान्या भविष्याम इत्यर्थः । हे द्विबर्हः । विद्याविद्ये द्वे बर्हे यस्य तत्संबोधनम् । द्विशिखत्रिशिखपञ्चशिखादय आचार्यभेदाः । हे गुरुमूर्ते नोऽस्माकं शर्म निरतिशयानन्दं प्रयच्छ यच्छ देहीत्यर्थः । यथा वयं त्वत्प्रसादलब्धज्ञानेनेन स्वमहिमप्रतिष्ठाः कृतकृत्या भविष्यामस्तथास्माकं मङ्गलमावहेति प्रघट्टकार्थः ॥ ७ ॥

एवमभीष्टफलदातारं परमेश्वरं स्वयं स्तुवानो वेदपुरुषस्त्वन्यमप्युपदिशति —

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥ ८ ॥

हे नर त्वं श्रुतं परमदयालुत्वेन प्रसिद्धं शिवं स्तुहि । तमेव विशिनष्टि— गर्ते गुहायां शेते सीदतीति गर्तसत् तम् । " गुहाहितं गह्वरेष्ठं पुराणम् " इति श्रुत्यन्तरात् । युवानं नित्यतरुणं जरारहितमित्यर्थः । मृगं न भीमं व्याघ्रमिव भयंकरम् । इवार्थे नकारः । वस्तुतस्तु पापकृतामज्ञानामेव भयप्रदम् । उपहत्नुं तत्त्वज्ञानशून्यान्पुनः पुनर्जन्ममरणक्लेशेन हननशीलमत एव तेषामेवोग्रमिति भावः। ननु स्तुहीत्युपदिश्यते कथं स्तोतव्यमत आह—हे मृड जरित्रे पुराणपुरुषाय तुभ्यमेतदर्थं स्तवानो भवामि । हे रुद्र तव सेनाः संशयविपर्यासादिवृत्तयोऽस्मदस्मत्तोऽन्यमनात्मज्ञं निवपन्तु निघ्नन्तु, इति हेतुना । शेषं समानम् ॥ ८ ॥

परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ ९ ॥

रुद्रस्य हेतिरविद्या पुनः पुनर्जन्ममरणादिदुःखहेतुर्नोऽस्मान्परिवृणक्तु परिवर्जयतु । तथा त्वेषस्य क्रुद्धस्याघायोः पापकृतो दुर्मतिरहंबुद्धिर्नः परिवर्जयतु । अज्ञानावृतो हि कोपनः पापकृच्च भवति । तादृग्रूपस्य दुर्मतिरस्माकं माऽस्त्वित्यर्थः । तथा मघवद्भ्यो हविर्दातृभ्यो यजमानेभ्यः स्थिरा बुद्धिरव तनुष्व । अत्र ' यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ' इत्युक्तरीत्या सर्वकर्मसमर्पणं हविस्तत्समर्पणेन प्रसेदिवान्परमेश्वरः स्थिरां मतिं तनुत इत्यर्थः । हे मीढ्वस्तोकाय तनयाय मृडयेत्युक्तार्थम् ॥ ९ ॥

ननु कोऽयमीश्वरो नाम योऽत्र पुनः पुनः स्तुतिगोचर इति । तत्र तावद्बहुभिर्बहुधा कल्पितस्य तस्यानिश्चितस्वरूपतया न शृङ्गग्राहिकयाऽयमेवेति दर्शयितुं शक्यः । तथा हि केचिन्माण्डूक्यादिषूपन्यस्तं सौषुप्तं प्राज्ञमेवेश्वरमाक्षते । " यदनेन कृतं विश्वं तदन्यथयितुं पुमान् । न कोऽपि शक्तस्तेनायं सर्वेश्वर

इबीरितः ॥ संस्काराणां परोक्षत्वात्सर्वज्ञत्वं न हीयते ” इत्यादिग्रन्थसंदर्भेण तस्य सर्वज्ञत्वं सर्वेश्वरत्वं च साधयन्ति । अन्ये पुनर्यथा जीवस्य लिङ्गशरीरमेवमीश्वरस्यापि विशुद्धसत्त्वप्रधानं मायारूपं किमपि कारणशरीरं सर्वनियन्तृत्वेन प्रकल्प्य तत्साक्षिणं परमात्मानं जीवसाक्षिणं प्रत्यगात्मानं निरुच्येमौ स्वोपाधिपक्षपातदशायां नियन्तृनियम्यभावेन तिष्ठन्तौ तद्विरहदशायामुदासीनबोधरूपावुपाधिप्रचारदर्शिनौ घटाकाशमहाकाशाविवाभेदेनैव प्रतीयेते इति । एतत्पक्षे कारणोपाधि कार्योपाधिं नियच्छति ' साक्षिणोस्त्वारोपमात्रम् । परे त्वीश्वराधीना त्वियमस्माभिर्जगतः प्रागवस्थाऽभ्युपगम्यते । अवश्यं च साऽभ्युपेया । तेन विना जगद्व्यापारानुपपत्तेः । इत्यादिनाखण्डसच्चित्सुखात्मनो ब्रह्मण एव समस्तजगदुपादानत्वं वर्णयन्ति । “ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ” । “ द्यावाभूमी जनयन्देव एक ” इत्यादिश्रुतिसूत्रेभ्यः । अपरे तु “ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ” इत्यादिश्रुत्यनुरोधेन मायोपाधिं बिम्बात्मकं कल्पयित्वा लिङ्गादर्शप्रतिबिम्बितानन्ताञ्जीवानेव बन्धमोक्षभाजः कल्पयन्ति । बिम्बात्मा तु सर्वज्ञो नित्यमुक्तश्चेति मन्यन्ते । सर्वथा ईश्वरः स्वतन्त्रः सर्वज्ञः किंचिज्ज्ञो जीव इति सर्वसंमतम् । वस्तुतस्तु परिपूर्णचिन्मात्रस्वरूपस्य परमेश्वरस्योपाधिभूतमायायामिदमिदानीं स्रष्टव्यमिदमिदानीं संहर्तव्यमिदमस्य कर्मेदमस्य कर्मेत्याकारका वृत्तिविशेषा जायन्ते । ते तत्रानुपलभ्यमानाः कार्येषूपलभ्यन्ते । यथा स्वमुखादौ विद्यमानानि शुभाशुभलक्षणानि स्वेनादृष्टानि प्रतिबिम्बेषूपलभ्यन्ते तद्वत् । तेनाहमीश्वरः सर्वमिदं नियच्छामीत्येवमनुभविता नास्तीश्वर इति सिद्धवद्भवति । इदं चान्यद्रहस्यमवधेयम् । समाभिप्रायाणि परस्पराविरुद्धकर्तृणि सर्वाण्यपि लिङ्गशरीराणि तत्समष्टिरेव माया नाम । तद्यथा प्रत्येकस्मिन्बीजे समानैव वृक्षनिर्माणशक्तिरेवं प्रत्येकस्मिँल्लिङ्गशरीरे जगन्निर्माणशक्तिरस्ति । अतस्तत्साक्षित्वेन वर्तमानः प्रत्येकजीव ईश्वरशब्दवाच्यः । समानशक्तियोगादतिसादृश्याच्च न जगद्भेदः प्रतीयते । अत एव यो यो जीवो मायाशमनादुद्बुध्यते स स ईश्वरमेवाऽऽत्मानं मन्तते । तथा च श्रुतिः— “ अहमन्नमहमन्नमहं श्लोककृत ” इति भृगुः । अहं वृक्षस्य रेरिवेति त्रिशङ्कुः । अहं मनुरभवामिति वामदेवश्च । अत एव “ ईश्वरोऽन्योऽहमप्यन्य इति विच्छेदकारिणीम् । व्याक्षिप्य विद्ययाऽविद्यामीश्वरोऽहमिति स्मृतिः ” इत्याचार्या

अप्यवोचन् । ततश्च यत्र यत्रानावृतज्ञानं स स ईश्वर इति स्तूयते । यथा रामकृष्णादिः । तत्र सत्त्वोत्कर्षेण पुण्योत्कर्षेण वाऽतिमानुषकर्मान्यथानुपपत्तिरेव तदीश्वरत्वे प्रमाणमित्याहुः । अत एव विशिष्टशक्तिमान्सर्वोऽपि " त्वं ब्रह्मा त्वं विष्णुस्त्वं सूर्य आत्मा जगतस्तस्थुषश्च " " इन्द्रो यातोऽवसितस्य राजा " इत्यादिश्रुतिभिरीश्वरत्वेन स्तूयते । अनेनैव हेतुना वाचस्पतिमिश्राः प्रतिजीवं प्रपञ्चभेदः प्रत्यभिज्ञा चातिसादृश्यादित्याहुः । एवं च प्रत्येकास्मिँल्लिङ्गशरीर एकैकप्रपञ्चोत्पादकत्वशक्तिसत्त्वादेव विनायकेन वरेण्याय श्रीकृष्णेनार्जुनाय दत्तात्रेयेण परशुरामाय त्रिविक्रमभारतिने च शुंभाय देव्या च विश्वरूपदर्शनं संगच्छते । वयमपि तत्त्वज्ञानेन क्रमादाविर्भूतसकलशक्तिभाजस्तथा करिष्यामः । तस्माच्छ्रुतिस्मृतिपुराणेतिहासादिषु श्रूयमाणा देवताः कथं परमेश्वरत्वेन स्तव्या इति युज्यत एव श्रीरुद्रस्यापि तथात्वेन स्तुतिः । तत्र लिङ्गशरीरं शुभाशुभवासनावशेन द्विविधं तदुभयोपाधिराशिवः शिव इति चोच्यते । तत्र घोरमूर्तिं प्रसाद्य संप्रति शिवमूर्तिं प्रार्थयते—

मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान
आचर पिनाकं बिभ्रदागहि ॥ १० ॥

हे मीढुष्टम सकलाभीष्टसेचक त्वमस्माकं शिवो भव त्वयि शिवे सत्यस्माकं सदा शिवमेव स्यादित्यर्थः । तथा त्वं नः सुमना भव । त्वयि सुमनसि सति ज्ञानदातरि सत्यज्ञानजनितसंशयखेदापगमेन सदाऽस्माकं सौमनस्यमेव स्यादित्यर्थः। ननु किमेवं प्रार्थ्यतेऽत आह—परम इति । यतः शस्त्रास्त्रधारिणं त्वां दृष्ट्वा वय बिभीमः । अतो यस्य च्छायायां त्वं सदा तिष्ठसि तस्मिन्नेव परमे वृक्षे महति वटवृक्ष आयुधं शस्त्रास्त्रादिकलापं निधाय कृत्तिमात्रं वसानः सन् आचर यत्र कुत्रापि संचर । इहाऽऽगन्तुमिच्छा चेद्दिव्यं विशरं पिनाकमात्रं यष्टिवत्करे बिभ्रत् आगहि आगच्छ । वस्तुतः परमेऽस्मिन्संसाररूपे वृक्षे कालरूपमायुधं निधाय कृत्तिर्वैराग्यं वसानो धारयमाणः पिनाकं प्रणवात्मकं धनुःकरे बिभ्रत्प्रणवमुच्चारय न्नित्यर्थः । सद्गुरुरूपेणाऽऽगत्य संसाररूपं वृक्षं छित्त्वा तत्त्वोपदेशेन कृतार्थी कुर्वित्यर्थः ॥ १० ॥

विकिरिद विलोहित नमस्ते अस्तु भगवः।
यास्ते सहस्रं हेतयोऽन्यमस्मन्निवपन्तु ताः
॥ ११ ॥

विशेषेण किरति वर्षतीति विकिरिः पर्जन्यः। तं ददातीति विकिरिदः। तत्संबुद्धौ हे विकिरिद हे विलोहित आदित्यरूपेत्यर्थः। "आदित्याज्जायते वृष्टिः" इति स्मृतेः। हे भगवस्ते नमोऽस्तु। अत्राऽऽदित्यः प्राणः स चन्द्रकुण्डलिन्या संपुज्य कण्ठकूपे पीयूषं वर्षतीति प्रसिद्धम्। तदुक्तं योगसूत्रे—कण्ठकूपे क्षुत्पिपासानिवृत्तिरिति। याश्च ते सहस्रमसंख्या हेतयः शस्त्राणि सन्ति ता अस्मत्तोऽन्यं निवपन्तु निघ्नन्त्वित्यर्थः॥ ११ ॥

सहस्राणि सहस्रधा बाहुवोस्तव हेतयः।
तासामीशानो भगवः पराचीना मुखा कृधि
॥ १२ ॥

अत्र ते बाहुवोर्विधिनिषेधयोः सहस्रशो हेतयः आज्ञाः सन्ति। हे भगवः, तासां मुखा मुखानि पराचीनानि कृधि कुरु। यतस्त्वं तासामीशानः कर्ता भवसि। "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिश्रुतेः। तत्त्वोपदेशेन विधिनिषेधातीतात्कुर्वित्यर्थः॥ १२ ॥

इति श्रीरुद्रभाष्ये दशमोऽनुवाकः॥ १० ॥

---

सर्वान्तर्यामी परमेश्वरः स्तुतिगोचर इति दशमे स्थितम्। अथास्मिन्नेकादशानुवाके प्रत्येकस्मिन्नीश्वरत्वं पर्याप्तमिति यदुक्तं तद्विशदयति—

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्।
तेषां सहस्रयोजनेऽव धन्वानि तन्मसि
॥ १ ॥

अत्र भुव्यन्तरिक्षे पाताले दिवि च ये जीवविशेषास्ते सर्वेऽपि रुद्रा ईश्वरा एव सर्वशक्तिभाज इत्युच्यन्ते। ननु कथमेतद्युक्तिसहं यतो न जीवेषु सर्वशक्तिमत्त्वमुपलभ्यते। केषुचिदेव परमेश्वरप्रसादादनुभूयते तपोबलाद्वा न सर्वेष्विति

चेत्सत्यम् । सन्त्येव सर्वज्ञकयो लिङ्गोपाधिषु जीवेष्वपि परमज्ञानावृततयाऽविद्यमाना इव भासन्ते । यदा तु परमेश्वरप्रसादादवाप्तज्ञाना भवन्ति तदा त्वाविर्भवति तत्रापि सर्वशक्तिमत्त्वम् । वस्तुवस्तु सन्ति यद्यपि जीवेष्वपि सर्वाविद्याः सर्वशक्तयश्च यथाऽपि यन्निष्ठाज्ञाननिवृत्तिः सैव विद्या प्रकाशते । नैयायिकस्य व्याकरणाज्ञानं वैयाकरणस्य न्यायविषयाज्ञानं संगच्छते । तस्मादेव नहि सर्वः सर्वज्ञ इत्यभियुक्तोक्तिरपि संगच्छते । तथा यच्छक्तिप्रतिबन्धानिवृत्तिः । सैवाऽऽविर्भवति । तत एव पुराणेतिहासादिषु महानुभावप्रभावाद्बहूनामन्धबधिरादीनां चक्षुःश्रोत्रादिलाभः स्मर्यते । निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायाद्यन्निमित्तमन्धबधिरत्वादि तन्निमित्तापाये नैमित्तिकान्धत्वादेर्निरासः संभवति । ततश्च यो यो जीवो यं यं काममुद्दिश्य चिरं मनसा चिन्तयति प्रतिबन्धबलाबलतारतम्येन द्राघीयसाऽल्पीयसा वा तं तं लभते । तदुक्तं पञ्चदश्याम्—“ तथाऽन्तर्याम्ययं यत्र यथा वासनया यथा । विक्रियेत तथाऽवश्यं भवत्येव न संशयः ” इति । इदमेव तपो नाम । “ मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ” इत्युक्तेः । अयं च प्रतिबन्धो जीवोपाधावीशोपाधावप्यस्ति । अन्यथाऽतिवृष्ट्यनावृष्ट्यादय ईतयो न स्युरिति बोध्यम् । अस्त्वेतत्प्रकृतमनुसरामः । सहस्राणि सहस्रशोऽसंख्याता ये रुद्रा अधिभूम्यां भूमिमधिकृत्य स्थितास्ते सर्वेऽपि रुद्रांशत्वाद्रुद्रा एव । तेषां धन्वानि तत्फलीभूतहिंसात्मकवासना इतः सहस्रयोजने देशे अव अवततज्याकानि कृत्वा तन्मासि स्थापयामः । जीवानां वासनाक्रौर्यनिरासेन सद्वासनत्वं प्रार्थयाम इति प्रघट्टकार्थः ॥ १ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि ॥ २ ॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ॥ ३ ॥

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ॥ ४ ॥

तथाऽस्मिन्महत्यर्णवे प्रसिद्धसमुद्रे संसारसमुद्रे च वर्तमाना ये जीवास्ते भवा भवन्ति पुनः पुनर्जन्म लभन्ते ते भवाः शिवरूपा एव वस्तुतः । ये चान्तरिक्षेऽधि-

चरन्ति पक्ष्यादयस्ते नीलग्रीवाश्चतपोमया अज्ञा इति यावत् । तेऽपि शितिकण्ठाः प्रसिद्धशिवरूपा एव । ये पुनरधःक्षमायां पाताले चरन्ति तेऽपि शर्वाः शिवरूपा एवेत्यवधार्यताम् । " तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतौ स्रष्टुरेव प्रवेष्टृत्वम् । अन्यथा त्वाप्रत्ययानुपपत्तेः । तथा " स यश्चायं पुरुषे यश्चासावादित्ये स एकः" " तत्त्वमसि " इत्यादौ जीवेशयोरभेदश्रवणाच्च । " सर्वं खल्विदं ब्रह्म । नेह नानाऽस्ति किंचन " इति जडमात्रस्यापि ब्रह्मानतिरिक्तत्वश्रवणे किं वाच्यं चेतनानां जीवानां ब्रह्मरूपत्वमिति भावः ॥ २ ॥ ३ ॥ ४ ॥

ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ॥ ५ ।

ये च वृक्षेषु ब्रह्मराक्षसादिरूपेण वसन्ति ये च सस्पिञ्जराः पिञ्जररूपास्तृणादिषु वसन्ति पिशाचरूपेण ये च नीलग्रीवा उपलक्षणमेतन्मयूरादिनानापक्षिरूपा भूतविशेषाः । तथा च श्रुतिः—" इत्थादुलूक आपतत् हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः " तदेतद्भूतान्यन्वाविश्य देवीं वाचं वदसीत्यर्थः । ये च विलोहिताः श्मशानादिस्थानगता उल्मुकपिशाचाः सन्ति तेऽपि वस्तुतः शिवरूपा एवेत्यर्थः ॥ ५ ॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥ ६ ॥

ये च भूतानामेषां सर्वेषामधिपतयो वेतालभैरवादयस्ते सर्वे विशिखासः शिखारहिताः कपर्दिनो रुद्रा एवेति भावः ॥ ६ ॥

ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥ ७ ॥

ये च भुञ्जानाञ्जनानन्नेषु विविध्यन्ति कण्ठगतग्रासेनैव मारयन्ति ॥ ७ ॥

ये पथां पथिरक्षय ऐलबृदा यव्युधः ॥ ८ ।

ये च पथां पथिरक्षयश्चोरादयः पथिकान्मारयन्ति । इलाया बिलं ऐलं बिलादि तत्र निरुध्य निघ्नन्ति । यव्युधः—अन्तरिक्षघ्नाः । यकारस्य व्योमवाचित्वात् । तेषां सर्वेषां धन्वान्यव तन्मसि तत्त्वज्ञानेन शान्तिं नयामः । यद्वा—इरा

अन्नं रलयोरभेदात् । तत्समूह ऐलं तस्य दातारः । एवं युः शत्रुः । तैः सह युध्यन्ते ते यव्युधः । शेषं समानम् ॥ ८ ॥

ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ॥ ९ ॥

ये च रुद्राः सृका च्छुरिका संसारवृक्षस्य च्छेदकं शस्त्रं वैराग्यमिति यावत्। तद्वन्तः । ज्ञानरूपशराधायकत्वान्निषङ्गः शुद्धसत्त्वोपाधिस्तद्वन्तो ज्ञानवैराग्यसंपन्नाः साधुरूपेण परोपकाराय तीर्थानि प्रचरन्ति तत्रैव प्रायशः साधुसमागमो भवति ॥ ९ ॥

य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ १० ॥

ये च सृष्टिकालमारभ्य वेदप्रामाण्येन एतावन्त इति गणिता वसिष्ठवामदेवभृग्वादयः । ये चेत उत्तरं भाव्या भूयांसोऽगणिता ब्रह्मविदो रुद्ररूपा जीवा दिशो वितस्थिरे सर्वासु दिक्षु स्थितास्तेषामित्यादि पूर्ववत् ॥ १० ॥

समाप्ता ऋचः । इदानीं विश्वतैजसप्राज्ञादिव्यष्टिसमष्टिरूपेण रुद्रा नमस्क्रियन्ते

नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ११ ॥

तत्र विराट् विश्वश्च पार्थिवशरीराभिमानित्वात्पृथिव्यां तिष्ठति । हिरण्यगर्भस्तैजसश्च पार्थिवशरीराभिमानरहितत्वादन्तरिक्ष इव तिष्ठति । “ बहिष्कुलायादमृतश्चरित्वा ” इतिश्रुतेः । ईश्वरप्राज्ञौ तदुभयरहितत्वाद्दिवीव तिष्ठतः । इदं च योगिनां प्रत्यक्षम् । उक्तं च योगरत्नावल्याम्—

अनादिसिद्धमज्ञानं प्राज्ञमावृत्य तिष्ठति। एतत्प्राज्ञस्य प्राज्ञत्वं स्वरूपाज्ञानयोर्मतः॥ १ ॥

बहुजन्मान्तराभ्यासादीश्वरानुग्रहादपि। यदा विमर्शजा विद्या समुदेति विशुद्धधीः॥ २ ॥

तिरस्कृत्य क्षणात्स्वस्थाऽऽवरकं तिमिरं दृढम्। विशुद्धसत्त्वरूपेण प्रत्यगात्मनि तिष्ठति॥ ३ ॥

प्राज्ञसंज्ञां विहायासौ लभते प्रत्यगात्मताम्। अथ तस्याप्यवस्थायां न देहो न जगत्क्वचित्॥ ४ ॥

भासते न च स स्वप्नो न मनस्तदुपाधिकम्। केवलानन्दसंदोहः परमात्मैव दृश्यते॥ ५ ॥

संप्रज्ञातसमाधौ तु नानैश्वर्यप्रदर्शनात्। तमेव स्वर्गमित्याहुस्तज्ज्ञा आरुणिकाः श्रुतौ॥ ६ ॥

जैमिनिरपि संप्रज्ञाते परमैश्वर्यं दर्शयति। "सोऽश्नुते सर्वान्कामान्सह" इति श्रुतिरपि तदेवाऽऽविष्करोति। ततश्च "क्षुत्खलु वै मनुष्यस्य भ्रातृव्यः" इति श्रुतेः। क्षुधारूपशत्रुनिर्बर्हणमन्नमेवेषुर्येषां तेऽन्नेषवो विश्वजीवाः। तैजसास्तु देहरक्षणाय वातं प्राणवायुं स्थापयित्वा देहाद्बहिर्यान्तीति वातेषवः। प्राणो हि सुप्तावुच्चैर्ध्वनति तेन देहापायकर्तारः सर्पादयो दूरं पलायन्ते। एवं वर्षं सोमकुण्डलिन्याः स्रवदमृतं तच्च क्षुत्पिपासानिवर्तकं जरामृत्युहरं चेति प्रसिद्धं योगशास्त्रे। तदेवेषुस्थानीयं साधनं येषां ते वर्षेषवः प्राज्ञा इत्यर्थः। प्रागग्रदशाङ्गुलिसंपुटीकरणे दश प्राचीर्नमस्क्रिया भवन्ति। एवं दश दक्षिणा इत्येके। एवं वस्तुतस्तु जीवो यां यां दिशं प्रति गच्छति तत्तद्दिगभिमुखानि दशेन्द्रियाणि भवन्ति। यद्वा पूर्वस्यां स्वर्गलोको दक्षिणस्यां यमलोको नरकश्च प्रतीच्यामसुरलोक उदीच्यां ब्रह्मलोक ऊर्ध्वायां ब्रह्मैव। ततश्च कर्मवशाज्ज्ञानवशाद्वा जीवस्य तत्तल्लोकगमने तानि दशेन्द्रियाण्यपि जीवेन सह तत्र तत्र गच्छन्तीति ज्ञाप्यते। "न तस्य प्राणा उत्क्रामन्ति" इति श्रुतेरित्यर्थः। तेभ्यः सर्वेभ्यो रुद्ररूपेभ्यो नमोऽस्तु। ते यूयं ब्रह्मविदो नोऽज्ञान्मृडयत। तथा यं कंचन वयं द्विष्मो यश्च नो बुद्धिपूर्वं द्वेष्टि तमुभयविधं शत्रुं वो युष्माकं जम्भे विदारितास्ये दधामि स्थापयामि। अत्र यं च वयं द्विष्मः स रोगादिरायुर्विघातेन योगभ्रं-

शकरः शत्रुर्यश्च न कामादि द्वेष्टि योगाच्चावयति, "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा" इति प्रसिद्धतरः शत्रुस्तमुभयविधं जम्भे विदारितास्यतुल्ये ज्ञानाग्नौ निक्षिपामः । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति गीतोक्तेः । अत्र सर्वकर्माणीत्युपलक्षणम् । ज्ञानप्रतिपक्षान्सर्वानपीति फलितोऽर्थः ॥ ११ ॥

इति श्रीविष्णुसूरिविरचिते रुद्रभाष्य एकादशोऽनुवाकः प्रथमाध्यायश्च समाप्तः ॥ १ ॥

---

अथाऽऽरभ्यते चमकम् । प्रथमेऽध्याये भक्तानुग्रहार्थमाविष्कृतनानामूर्तेः सर्वजगत्कारणस्य परिपूर्णस्य परमात्मनो मायोपाधिकं नानात्वं प्रतिपाद्येदानीं बाह्याभ्यन्तरचारिणविश्वरब्रह्मसंज्ञावग्नाविष्णू प्रसाद्य नानाशिषः प्रार्थयते–

ॐ अग्नाविष्णू सजोषसेमा वर्धन्तु वां
गिरः । द्युम्नैर्वाजेभिरा गतम् ॥ १ ॥

अत्र विराड्विश्वादिरूपेण नानाविधं भोग्यमत्तीत्यग्निरीश्वरः । सत्तापकाशाभ्यां सर्वं वस्तुजातं व्याप्नोतीति विष्णुः परमात्मा तौ । हे अग्नाविष्णू युवां सजोषसौ समानप्रीतियुक्तौ वामिमाः स्तुतिरूपा अस्मदीया गिरो वर्धन्तु तोषयन्तु युवामपि द्युम्नैर्द्रव्यैर्वाजेभिरन्नैश्च सहास्मत्संतोषायाऽऽगतमागच्छतम् । यथा पिता स्वापत्यतोषणाय किंचित्प्रयच्छति तद्वदित्यर्थः ॥ १ ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसि-
तिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे
श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योति-
श्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे
व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं
च मे वाक्च मे मनश्च मे चक्षुश्च मे
श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च
मे सहश्च म आयुश्च मे जरा च म आ-

त्मा च मे तनूश्च मे शर्म च मे वर्म च
मेऽङ्गानि च मेऽस्थानि च मे परूंषि च
मे शरीराणि च मे ॥ ६ ॥

हे अग्नाविष्णू मे वाजोऽन्नमस्तु । अध्यात्मपक्षे " स्थूलं तर्पयते विश्वं तैजसः प्रविविक्तभुक् । आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत " इत्याचार्योक्तेः स्थूलादि त्रिविधमन्नमित्यर्थः । प्रसवः शमदमादिः " शान्तो दान्तः " इति श्रुतेः । प्रयतिः—ज्ञानजन्या शुद्धिः । " नहि ज्ञानेन सदृशं पवित्रमिह विद्यते " इति स्मृतेः । प्रसितिः—यावद्देहपातं देहबन्धनम् " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते " इति श्रुतेः । धीतिर्देहधारणसामर्थ्यं " मुक्तोऽपि तावद्बिभृयात्स्वदेहम् " इत्युक्तेः । क्रतुः समाधिजं पुण्यं " क्षणमात्रं ब्रह्माकारवृत्तौ क्रतुचतुःसप्तत्या यत्पुण्यं तदवाप्नोति " इति पातञ्जलोक्तेः । स्वरोऽकाराद्युपेतः प्रणवस्तद्रूपताऽस्तु । श्लोकः——जगद्धितता कीर्तिः । कीर्तिः पृष्ठं गिरेरिवेति श्रुतेः । श्रावः श्रावयितृत्वम् । उपदेशसामर्थ्यमित्यर्थः । श्रुतिः श्रवणम् । " श्रोतव्यः " इत्यादिश्रुतेः । ज्योतिः शुद्धसत्त्वपरिणतलिङ्गदेहप्रकाशः । " सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते " इति स्मृतेः । स एव सुवः स्वर्गः । " तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषाऽऽवृतः " इति श्रुतेः । प्राणापानव्यानाः प्रसिद्धाः । असुशब्देन समानोदानौ समानोदानवैकल्यं विना देहपाताभावात्तस्यैव मुख्यप्राणत्वमित्यर्थः । चित्तं स्मरणशक्तिमदन्तःकरणवृत्तिविशेषः । अधीतमेवाऽऽधीतमध्ययनजन्यं ज्ञानम् । वाग् यथार्थभाषणम् । मनः संकल्पविकल्पात्मकवृत्तिविशेषः । अत्राध्ययनस्य बुद्धिधर्मत्वादाधीतशब्देनोत्तरत्राहंकारस्य वक्ष्यमाणत्वादन्तःकरणचतुष्टयं संपद्यते । चक्षुरिन्द्रियं प्रसिद्धम् । श्रोत्रं श्रवणेन्द्रियम् । दक्षशब्देन रसगन्धग्रहणपटुतरं रसनेन्द्रियं घ्राणेन्द्रियं बलं बलहेतुस्त्वगिन्द्रियमित्येवं ज्ञानेन्द्रियपञ्चकं मे भवत्वित्यर्थः । ओजोऽष्टमधातुर्मनसो धैर्यप्रदः । " तस्य क्षये बिभेति दुर्बलोऽत्यर्थम् " इति वैद्यकोक्तेः । सहःशब्देन पञ्चापि कर्मेन्द्रियाणि । आयुर्दीर्घायुष्ट्वम् । जरा च वयोवृद्धत्वम् । प्रौढिहेतुः । आत्मा चात्राहंकार एव । शास्त्रप्रसिद्धस्य परमात्मन आशास्यकोटावप्रवेशात् । स च सात्त्विको ब्रह्मविदां श्रूयते—" अहꣳ श्लोककृत् । अहं मनुरभवꣳ सूर्यश्च । अहं वृक्षस्य

रेरिवा " इत्यादिर्मुक्तिहेतुः । तनूर्विद्याविद्येति प्रसिद्धा । " विद्यां चाविद्यां च यस्तद्वेदोभयं सह " । " साशनानशने उभे " इत्यादौ । शर्म ब्रह्मानन्दः । " यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः " इति स्मृतेः । वर्म सर्वतो रक्षकं ब्रह्मविज्ञानम् । " अभयं जनक प्राप्तोऽसि " इति श्रुतेः । अङ्गानि चरणाद्यवयवाः । अस्थानि अस्थीनि । परूंषि जान्वादिपर्वाणि । शरीराणि नृपश्वादीनि देहानि । नन्वत्र विद्यमानानामेव चित्तादीनां पुनरस्त्विवति प्रार्थनमयुक्तमिति चेत्सत्यम् । तत्र चित्तादिशब्देन तत्तच्छक्तयः प्रार्थ्यन्त इत्यदोषः । तद्यथा—चक्षुःशब्देन दूरदर्शित्वं श्रोत्रशब्देन दूरश्रवणादीत्यादि बोध्यम् ॥ १ ॥

इति चमकभाष्ये प्रथमोऽनुवाकः ।

---

प्रथमेऽनुवाके स्थूलसूक्ष्मदेहौ तदुपजीव्यमन्नादिकं चाऽऽशास्येदानीं द्वितीयेऽनुवाके ज्ञानजन्याः सिद्धीराशास्ते—

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे
भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे
महिमा च मे वरिमा च मे प्रथिमा च
मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे
वृद्धिश्च मे सत्यं च मे श्रद्धा च मे
जगच्च मे धनं च मे वशश्च मे त्विषिश्च
मे क्रीडा च मे मोदश्च मे जातं च मे
जनिष्यमाणं च मे सूक्तं च मे सुकृतं च
मे वित्तं च मे वेद्यं च मे भूतं च मे भवि-
ष्यच्च मे सुगं च मे सुपथं च म ऋद्धं
च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च
मे मतिश्च मे सुमतिश्च मे ॥ २ ॥

हे भगवन्मे ज्यैष्ठ्यमार्तार्थार्थिजिज्ञासूनां श्रेष्ठत्वमस्तु तदुक्तं गीतासु—"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् " इति । मन आदीनामाधिपत्यं च मेऽस्तु ।

" वाक्पतिर्मनस्पतिः " इत्यादिश्रुतेः । मन्युर्विषयतिरस्कारः । भामो देहाद्युपाधेरपि तिरस्कारः । अमोऽप्रमेयत्वम् । लोकैरज्ञातलिङ्गत्वं न विदन्ति जना यं वै सोऽसाविति न वेति चेति भागवतोक्तेः । अम्भो देहान्तरारम्भकतत्त्वविशेषः । " आपः पुरुषवचसो भवन्ति " इति श्रुतेः । येन नानादेहधारणसामर्थ्यं संजायते । जेमा कामादिजयसामर्थ्यम् । महिमा सर्वतो महत्तरत्वम् । " अणोरणीयान्महतो महीयान " इति श्रुतेः । वरिमा वरदानसामर्थ्यम् । प्रथिमा प्रसिद्धिः । विद्याद्युदासीनगुणानां ख्यातिः कीर्तिः, दातत्वादिपरोपकारगुणख्यातिः प्रसिद्धिरिति भेदः । वर्ष्मा भेदोवृद्धिः । शोभाहेतुत्वात् । द्राघुया सद्गुणानां दृढवृद्धिः । यद्वृद्धं ज्ञानादिकं या च पुनस्तस्योत्तरोत्तरमभिवृद्धिः साऽप्यस्तु । सत्यं शत्रुमित्रादिषु समदर्शनम् । श्रद्धा—आत्मास्तिक्यबुद्धिः । जगत् हार्दाकाशस्थं विश्वम् । " यच्चेहास्ति यच्च नास्ति सर्वं तदत्र गत्वा विन्दते " इति श्रुतेः । धनं सत्यसंकल्पजन्या संपत् । " संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " इत्यादिश्रुतेः । ब्राह्मणजैमिनिरुपन्यासादिभ्य इति सूत्राच्च । वशो जितेन्द्रियत्वम् । त्विषिर्ब्रह्मवर्चसम् । क्रीडा—आत्मन्येव शिशुवल्लीला । मोद आत्मानन्द आत्मरतिर्वा । आत्मक्रीड आत्मरतिरिति स्मृतेः । जातमतीतज्ञानम् । जनिष्यमाणमनागतज्ञानम् । सूक्तं यथार्थभाषणम् । सुकृतं ज्ञानयज्ञजन्ममपूर्वम् । " तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी " इत्यनुवाकप्रसिद्धम् । वित्तं ज्ञातं देहादि जगत् । वेद्यं प्रत्यगात्मतत्त्वम् । तदुभयमपि जीवन्मुक्तिसुखार्थमस्तु । भूतं परं ब्रह्म यविष्यदं धर्मजन्यमपूर्वं स्वर्गादि तच्च देहपातोत्तरं भविष्यत् । न च विरुद्धमेतदिति मन्तव्यम् " श्रोत्रियस्य चाकामहतस्य " इति श्रुतेर्जीवन्मुक्तोऽपि यदि कामहतः स्यात्तर्हि तदभिप्रायेण स्वर्गप्रार्थनमपि न विरुध्यते । तदुक्तं भागवते—" यदि प्रयास्यन्नृप पारमेष्ठ्यम् " इत्यादि । सुगं शोभना गतिर्विदेहमुक्तिः । सुपथं सुषुम्नामार्गेण ब्रह्मलोकगतिः । ऋद्धं स्वर्गसुखम् । ऋद्धिर्ब्रह्मलोकसंपत् । क्लृप्तं देहप्रारब्धम् । भोगेनैव क्षप्यम् । क्लृप्तिः संचितानागतयोः क्षयसामर्थ्यम् । मतिः ऋतंभरा नाम प्रज्ञा योगशास्त्रप्रसिद्धा । सुमतिर्ब्रह्मविद्या । " तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्यैश्च नाऽऽसीदस्ति भविष्यति " इत्युक्तप्रभवा ॥ २ ॥

इति चमकभाष्ये द्वितीयोऽनुवाकः ।

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च
मे कामश्च मे सौमनसश्च मे भद्रं च मे
श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च
मे द्रविणं च मे यन्ता च मे धर्ता च मे
क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च
मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च
मे सीरं च मे लयश्च म ऋतं च मेऽमृतं
च मे यक्ष्मं च मेऽनामयच्च मे जीवा-
तुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽ-
भयं च मे सुगं च मे शयनं च मे सूषा
च मे सुदिनं च मे ॥ ३ ॥

शं ब्रह्मात्मैक्यानुभवजन्य आनन्दः । मयो ब्रह्मज्ञानप्रयुक्तः संतोषः । तथा च श्रुतिः—"तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः" इत्यादिः अन्वनुकाम्यतेऽसावनुकामः शमः । "निचाय्य तं शान्तिमत्यन्तमेति" इति श्रुतेः । ज्ञानिनो हि शान्तिकामाः । काम्यतेऽसौ कामो दमः । अव्यभिचारी कामो वा । सौमनसस्तदुभयप्रयुक्तनिर्विकारावस्थानम् । भद्रादिशब्दैः षड्विधक्लेशराहित्यमुच्यते । तदुक्तं "गर्भे जनौ च बाल्ये च यौवने स्थाविरेऽपि च । मरणे चेति संक्लेशाः षड्विधाः संप्रकीर्तिताः ॥ इति । तत्र मुक्तस्य पुनरुत्पत्त्यसंभवात्सर्वथा क्लेशाभाव इत्येकः पक्षः । सत्यपि तस्मिन्दुःखाभाव इत्यपरः । तद्यथा भद्रं गर्भेऽपि सुखं वामदेवादिवत् । श्रेयो जननेऽपि सुखं श्रीकृष्णादिवत् । वस्यो बाल्येऽपि सुखं शुकादिवत् । यशो यौवनेऽपि सुखं नारदादिवत् । भगः स्थाविरेऽपि सुखं सनत्कुमारादिवत् । मरणेऽपि सुखं वसिष्ठादिवत् । द्रविणमित्यर्थः । यन्ता आनन्दमयः । धर्ता विज्ञानमयः । क्षेमो मनोमयः । धृतिः प्राणमयः । विश्वमन्नमय इति पञ्चापि कोशा मद्वशगाः सन्त्वित्यर्थः । तदुक्तं पञ्चाशिकायाम्—"यन्ताऽहं धर्ताऽहं कर्ताऽहं मृत्युतो न भीतिर्मे देहः सर्वस्वं मे जाने

यस्सर्वदाऽत्र साक्षितयेति। महश्चिन्मयप्रकाशः। संवित्सर्वभूतेष्वात्मबुद्धिः। ज्ञानं स्वरूपस्फूर्तिः सूराविद्या। प्रसूर्माया। सीरं तदुभयविचारसाधनं शास्त्रं च मेऽस्तु मज्ज्ञानगोचरं भवतु। लयो मनोवृत्तेर्ब्रह्मणि। ऋतं कल्पमुक्तिः। अमृतं सद्योमुक्तिः। अयक्ष्मं यावज्जीवं शरीरस्वास्थ्यम्। अनामयत् क्षुद्ररोगराहित्यम्। जीवातुर्जीवनौषधं तेनैव दीर्घायुष्ट्वम्। अनमित्रं शत्रुराहित्यम्। तावतैवाभयम् शुभं सन्मार्गप्रवृत्तिः। यद्यपि जीवन्मुक्तस्य नास्ति पापादिसंबन्धस्तथाऽपि लोकप्रवृत्त्यर्थं तस्यापि सन्मार्गप्रवृत्तिर्न्याय्येति भावः। शयनं स्वरूपावस्थानम्। सूषा दुर्मुखदर्शनाभावः। सुदिनमनिष्टवार्ताद्यश्रवणं मेऽस्तु॥ ३॥

इति चमकभाष्ये तृतीयोऽनुवाकः॥ ३॥

---

एवमनुवाकत्रयेण पारमार्थिकसुखान्याशास्य जीवन्मुक्तिदशायां प्रारब्धयोगेन कतिपयकालपर्यन्तं देहावस्थानात्तदुपजीव्यपदार्थापेक्षाऽप्यर्थसिद्धेति सांसारिकसुखसाधनानि कानिचिद्वस्तून्याशास्ते—

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे
घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च
मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भि-
द्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे
पुष्टिश्च मे विभु च मे प्रभु च मे बहु च
मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षि-
तिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे
व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च
मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे
मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे
श्यामाकाश्च मे नीवाराश्च मे॥ ४॥

ऊर्क् बलहेतू रस औषध्यादिजनितः कषायः सूनृता यथार्थभाषणं व्यव-

हारेऽपि । दुग्धं गव्यं माहिष्यं च । रस इक्ष्वादेः । घृतं गव्याद्यन्यतमम् । मधु माक्षिकम् । सग्धिः सहभोजनम् । सपीतिः सहपानम् । कृषिः क्षेत्रारामादिसमृद्धिः । तज्जीवनाय यथाकालं वृष्टिश्च । जैत्रं जयसामर्थ्यावहं सुरामांसादि । अवश्यं विक्रमवतो राज्ञस्तदपेक्षणात् । स्मर्यते च जनकादयोऽपि राजन्या ब्रह्मविदः । औद्भिद्यं गवाश्वाद्युपजीव्यं तृणादि । रयिर्लक्षकोटयादिसंख्यं धनमात्रं येन धनिन इत्युच्यन्ते । रायश्छत्रचामरादिसंपदः । याभी राजान इत्युच्यन्ते । पुष्टं भार्यापत्यादिः । तथा च श्रुतिः—"पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य" इति । एवं मदीयेऽपि शरीरे पुष्टिरस्त्वित्यर्थः । विभ्वाद्याक्षितिशब्दैः सप्त राज्याङ्गान्युच्यन्ते । विभ्विति विभुशब्देनामात्यसंतत्तिः । प्रभुशब्देन स्वयं स्वामी । बहु सुहृद्बाहुल्यम् । भूयः कोशबाहुल्यम् । पूर्णं राष्ट्रम् । पूर्णतरं दुर्गबाहुल्यम् । अक्षितिः सैन्यसंपत्तिः । कूयवाः सूक्ष्मयवा आरण्याः । येषां पिष्टं पुष्टयै विनियुज्यते । अन्नमदनीयभोग्यम् । क्षुद्भोजनशक्तिः उभयमेवापेक्षितम् "भोग्यं भोजनशक्तिश्च नाल्पस्य तपसः फलम्" इत्युक्तेः । व्रीह्यादीनि नीवारान्तानि द्वादश धान्यानि । नत्र खल्वाश्वणकाः । अन्यदातिरोहितम् ॥ ४ ॥

इति चमकभाष्ये चतुर्थोऽनुवाकः ॥ ४ ॥

---

अश्मा च मे मृत्तिका च मे गिरयश्च मे
पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे
हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च
मे श्यामं च मे लोहं च मेऽग्निश्च म आ-
पश्च मे वीरुधश्च म ओषधयश्च मे कृष्टप-
च्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे
पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च
मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु
च मे वसतिश्च मे कर्म च मे शक्तिश्च
मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे
॥ ५ ॥

अश्मेति जातावेकवचनम्। “ धातुपाषाणमृत्स्नाद्याः सर्वे ते पृथिवीगतेः ” इत्युक्तरीत्याऽश्माद्याः पार्थिवपदार्था मदधीनाः सन्त्वित्यर्थः। अश्मानः पाषाणाः। गिरयो नद्युद्गमस्थानभूता महापर्वताः। पर्वताः केवलशिलोच्चयाः। सिकता वालुकाः। वनस्पतयोऽश्वत्थाद्याः। “ अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ” इति मानवात्। हिरण्यं सुवर्णम्। तत्सयनन्तरपाठादयःशब्देन रौप्यम्। अयः शुभ्रत्वहविधौ रौप्ये कार्ष्णायसेऽपि चेति कोशान्तरात्। सीसं प्रसिद्धम्। त्रपु वङ्गम्। श्यामं कार्ष्णायसं लोहविशेषः। लोहं प्रसिद्धम्। अग्निर्जाठरः स प्रदीप्तोऽस्तु। आपं आप्योऽग्निर्येन जलं पच्यते तृष्णा चोत्पद्यते। वीरुधः फलिन्यः पुष्पिण्यश्च लताः। ओषध्यः फलपाकान्ता दूर्वादयश्च कर्मण्याः। कृष्टपच्यं गृहस्थोपयोग्यन्नम्। अकृष्टपच्यं वानप्रस्थानामुपयोगि च। ग्राम्या आरण्याश्च पशवो देवानाम्। अत एव ते यज्ञेन कल्पन्ताम्। वित्तं पित्रार्जितं धनम्। वित्तिः स्वसंपादितवित्तं संपादनशक्तिर्वा। भूतं गुप्तं धनम्। भूतिः मकर्द राज्यादि। वसु भाण्डोपकरणादिकं तद्युक्ता वसतिर्गृहं च। कर्म यज्ञादि तदर्थं शक्तिश्च। अर्थोऽर्थशास्त्रं कलाकौशल्यं येन संपद्यते। एम इहलोके यशः। इतिः संकल्पसिद्धिः। गतिः स्वर्गादिः ॥ ५ ॥

इति चमकभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

---

एवमनुवाकद्वयेन सांसारिकसुखं संप्रार्थ्येदानीं काश्चिद्देवता अन्तर्यामिप्रेर्या निर्दिश्य सर्वासामपि देवतानामन्तर्यामीन्द्र एव प्रेरक इत्युपदेष्टुं सर्वस्यापीन्द्रशब्दसंबन्धमाह—

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च
मे सविता च म इन्द्रश्च मे सरस्वती च
म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्प-
तिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च
मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म
इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णु-
श्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च

मे मरुतश्च म इन्द्रश्च मे विश्वे च मे
देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च
मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म
इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा
च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च
मे ॥ ६ ॥

तत्र " इन्द्रो मायाभिः पुरुरूप ईयते " इति श्रुत्या परमात्मैवेन्द्रः । स एव सर्वदेवतास्वरूपः । " एकं सन्तं बहुधा कल्पयन्ति " इत्यादिश्रुत्यन्तरात् । अत्तीत्यग्निर्भोक्ता जीवः सोऽपीन्द्र एव । मेऽस्त्विति सर्वत्र संबन्धः । उमया सहितः सोम ईश्वरः सोपीन्द्रः परमात्मा । तत्रैवेश्वरत्वाध्यसात् । षूङ् प्राणिप्रसव इति धातोः सविता सृष्टिकृत् ब्रह्मा तच्छक्तिश्चेन्द्र इति । " लोके स्त्रीवाचकं यच्च यच्च पुंशब्दवाचकम् । परमेव हि तत्तत्त्वमवेहि व्यासनन्दन " इति स्कान्दोक्तेः । पुष्णाति सकलदेहामिति पूषाहंकारोपाधिर्जीवः । स एव बुध्याधिष्ठाता बृहस्पतिः । स एव मृत्योस्त्रायत इति मित्रो मनसस्पतिः । " मनो हि भयधैर्याभ्यां रोगारोग्यं प्रसूचयेत् " इति याज्ञवल्क्योक्तेः । स एव चिद्रूपेण वरुणस्त्रिकालदर्शी स सर्वोऽपीन्द्र एव तत्तदात्मा । तेन च ब्रह्मविद्याऽऽयुर्विद्या ज्योतिर्विद्येति बुद्धिमनःश्चित्तानां यथाक्रमं विद्यात्रयमुक्तं भवति । अथामूषामेव विद्यानामुपविद्यापञ्चकमाह- -त्वष्टेति । त्वष्टा चक्षुर्विद्याधिपतिः । यया विप्रकृष्टव्यवहितदूरस्थितमपि वस्तु समीपस्थमिव दृश्यते । धाता दूरश्रवणविद्याधिपतिः श्रोत्राधिष्ठाता । विष्णुर्दूरस्थरसास्वादनकृद् रसनेन्द्रियाभिमानी । दूरस्थगन्धोपलब्धिहेतुरश्विनीकुमारस्वरूपः प्राणाधिपतिर्दूरस्थस्पर्शज्ञानहेतुर्मरुद्रूपस्त्वगिन्द्रियाभिमानी स सर्वोऽपीन्द्र इत्यर्थः । ये पुनरवशिष्टकरणाभिमानिनो विश्वेदेवास्तेऽपीन्द्रस्वरूपा एव । तथा पृथिव्यन्तरिक्षं द्युलोको मनुष्यादिनिवासभूतास्तेऽपि तदानन्दांशत्वात्तद्रूपाः । एवं दिशो दिगभिमानिन्यो देवता इन्द्रस्वरूपाः । मूर्धा ब्रह्मलोकश्छान्दोग्यादौ वर्णितस्तत्रत्यप्रजापतिश्चेन्द्ररूपो मम श्रेयसे भूयादित्यर्थः । यथाश्रुतेऽपीन्द्रो हि सर्वदेवतासु महत्तरः । तथा च श्रुतिः—तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः, इति ॥ ६ ॥

इति चमकभाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

स्थितमेतत्षष्ठेऽनुवाके सर्वस्वरूपत्वमिन्द्रशब्दवाच्यस्य प्रत्यगात्मनः । इदानीं यथोक्तज्ञानसंपन्नस्य विदुषः किमविदुष इव प्राणोत्क्रान्तिरुतास्ति विशेष इत्यपेक्षायामाह । तत्र निरपेक्षस्य नास्ति प्राणोत्क्रमणं " न तस्य प्राणा ह्युत्क्रामन्तीहैव समवलीयन्ते " इति श्रुत्यनुसारेण तदीयप्राणाः प्रत्यगभिन्नपरमात्मन्येव विलीयन्ते । सापेक्षस्य ब्रह्मलोकजिगमिषोरपि सृतिरनेकधा श्रूयते—क्वचिन्नाडीरश्मिसंबन्धेन क्वचिदर्चिरादिमार्गेण क्वचिदग्निवायुसूर्यद्वारेण स एवैतं देवयानं पन्थानमापद्याग्निलोकमागच्छति । यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति । " सूर्यद्वारेण ते विरजाः प्रयान्ति " इत्यादिश्रुतिभ्यः । एवमनियमे प्राप्ते कश्चिन्नियमो वक्तव्यः । तत्र " रश्म्यनुसारी " इति सूत्रानुसारेण " अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते " इति श्रुत्यन्तरानुरोधाच्चास्ति नियमः ।

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ ७ ॥

अत्रांशुशब्देन तेजोमयी सुषुम्ना नाडी " तयोर्ध्वमायन्नमृतत्वमेति विष्व

गन्या उत्क्रमणे भवन्ति " इति श्रुतेः । रश्मिशब्देन तदीया रश्मयः । जातावेकवचनम् । यथोक्तब्रह्मवित्सांपरायसमये प्रियतमेव सुषुम्नयाऽऽलिङ्गितस्तदीयरश्मिभिश्चाऽऽप्यायित ऊर्ध्वं ब्रह्मलोकगमनाय प्रक्रमते । तदानीं चायमदाभ्यो भूतकृतशोषणप्लोषणाद्यभावादक्षोभ्यः । किंचायमधिपतिरणिमादिसर्वसिद्धीनाम् । एतत्पक्षे मम जीव एवंभूतोऽस्त्विति संबन्धः । इडापिङ्गलानाडीद्वयमुपांशुशब्दवाच्यं यदृच्छावशान्मर्त्यलोकगमनाय स्वर्गमनाय चास्त्वित्यर्थः । " इडया मर्त्यलोकं पिङ्गलया स्वर्लोकम् " इति श्रुत्यन्तरात् । यत्र मे मनस्तत्रैव ममान्तर्याम्यस्तु । यामशब्द इकारसंक्षेपः पारोक्ष्याय । ऐन्द्रवायवः प्राज्ञजीवः । सुप्तौहीन्द्रः साक्षी । वायुः प्रा श्व केवलं जागर्ति । मैत्रावरुणस्तैजसः स्वाप्नजीवः । आत्मैवास्य ज्योतीर्भवतीति मित्रशब्देन ज्योतिः । वरुण आप्यधातुः । उभयोरेव स्वप्ननिर्मातृत्वप्रसिद्धेः । आश्विनो गन्धोपलक्षितपार्थिवदेहोपाधिविश्वसंज्ञको जाग्रज्जीवः । सोऽपि तत्रास्तु । अधुनैव मे ब्रह्मलोकाय प्रतिप्रस्थानमस्तु । पुंस्त्वं छान्दसम् । एवं चार्चिरादिमार्गाणामपि यथाययमस्मिन्नेवान्तर्भावान्नास्ति कश्चिद्भेद इत्यवगन्तव्यम् । अथ यथोक्तनाडीरश्मिसंबन्धाद्ब्रह्मलोकं गतस्य प्रथमं विरजातिक्रमं विधत्ते शुक्रश्च म इति । अत्र शुक्रशब्देन विरजा नाम सुधानदी । मन्थीशब्देनाऽऽग्रयणशब्देन चारश्च ण्यश्चार्णवौ प्रसिद्धौ । वैश्वदेवो विश्वेषां देवानां निवासभूतः सोमसवननामाऽश्वत्थः । ध्रुवश्चिरायुर्ब्रह्मा वैश्वानरस्तदीयो मन्त्री ऋतवः षट् ग्रहाः नव प्रसिद्धा मूर्तिमन्तो यत्राऽऽसते ते सर्वे ममानुकूला भवन्त्वित्यर्थः । अतिशयेन यमनियमादिना गृह्यन्ते मुनिभिरित्यतिग्राह्याः सर्वे वेदाः शास्त्राणि पुराणानि च षडङ्गसहितानि यत्र मूर्तिधराणि तानि मम प्रतिभान्त्वित्यर्थः । ऐन्द्राग्न इन्द्राग्निसंबन्ध्युपासनामार्गः कर्ममार्गश्च मम हृदये स्फुरतु । यद्यपि ब्रह्मविदो नेयमिच्छा संभवति तथाऽपि तस्य हृदयज्ञत्वमाशासितमित्यविरोध. । वैश्वदेवस्तु तदुपलक्षितः पञ्चमहायज्ञः । इतः परं मरुत्वत्याद्या व्युत्क्रमेण पञ्चविद्याः । यथा मरुत्वती स्थापत्यविद्या सा च मत्सरजयाल्लभ्यते । माहेन्द्री पर्जन्यविद्या मोहजयात् । अदितिज्योतिर्विद्या लोभजयात् । सावित्री, आयुर्विद्या क्रोधजयात् । सरस्वती ब्रह्मविद्या कामजयाल्लभ्यते । तदभिमानिनो देवा मरुत्वतीयादिशब्देनोच्यन्ते । पौष्णादिशब्देन यथा-

कथं ब्रह्मचर्यगृहाश्रमसंन्यासा निगदिता ज्ञातव्याः । तत्र पुष्णाति तपःप्रभावमिति पौष्णः । पत्नीवतोऽयं पात्नीवतः । हरिणा योजयतीति हरियोजन इति व्युत्पत्तिसिद्धाः ॥ ७ ॥

इति चमकभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

---

एवं सप्तमे ब्राह्मलौकिकीं गतिमभिधाय सद्योमुमुक्षोर्देहविलापने भावनाविशेषं विधत्ते—

इ॒ध्मश्च॑ मे ब॒र्हिश्च॑ मे॒ वेदि॑श्च मे॒ धिष्णि॑-
याश्च मे॒ स्रुच॑श्च मे चम॒साश्च॑ मे॒ ग्रावा॑-
णश्च मे॒ स्वर॑वश्च म उपर॒वाश्च॑ मे धि॒ष-
वणे च मे द्रोणकल॒शश्च॑ मे वाय॒व्या॑नि
च मे पूत॒भृच्च॑ म आध॒वनीय॑श्च म॒ आ-
ग्नीध्रं च मे ह॒वि॒र्धानं॑ च मे गृ॒हाश्च॑ मे॒
सद॑श्च मे पु॒रो॒डाशा॑श्च मे पच॒ताश्च॑ मेऽव-
भृथश्च॑ मे स्वगाकारश्च॑ मे ॥ ८ ॥

---

प्रत्यगभिन्नपरमात्मतामभिप्रेप्सोर्मम देहोऽयमिध्मस्थाने भूयात् । लोमानि बर्हींषि । वक्षो वेदिः । धिष्णियाः प्राणाः स्रुचश्च ज्ञानेन्द्रियाणि । चमसाः कर्मेन्द्रियाणि । ग्रावाणोऽस्थीनि । स्वरवो देहच्छिद्राणि । उपरवाः शिरःकपालानि । अधिषवणे स्मरोदयशास्त्रप्रसिद्धौ चन्द्रसूर्यस्वरौ । द्रोणकलशो योगशास्त्रप्रसिद्धः कण्ठकूपः । "कण्ठकूपे क्षुत्पिपासानिवृत्तिः" इति पातञ्जलसूत्रात् । वायव्यानि वायुपरिणामविशेषा हंसोपनिषदुक्ता दश स्वराः । पूतभृत् पूतं बिभर्तीति पूतभृत् । ऋतंभरा प्रज्ञा योगशास्त्रप्रसिद्धा । आधीयन्ते नानाविषया अस्मिन्नित्याधवनीयः । ओजःसंज्ञको मनोधातुः । अग्निं चित्प्रकाशं धरतीत्याग्नीध्रम् । शुक्रसंज्ञको बुद्धिधातुः । हविः स्मरणसंस्कारं धत्ते तद्धविर्धानम् । सहःसंज्ञकश्चित्तधातुः । गृह्यन्त इति गृहा विषयाः शब्दादयः सदो हृदयस्थानम् । पुरोडाशाः कामादयो नानाजातीयाः । काम आज्यं मन्थुः पशु

रित्यादिश्रुत्यन्तरात् । पञ्चातास्तमआद्याः पञ्चाविद्यावृत्तयः । नाकनयेतपद्मा-ष्विव जीवा आभिरिति व्युत्पत्तेः । अवभृथ इडापिङ्गलासुषुम्नासंगमे प्रयागाख्ये यज्ञान्तिमस्नानम् । तदुक्तं हठप्रदीपिकायां—“ सुषुम्ना परमा गङ्गा पिङ्गला तु सरस्वती । यमुनेडा तत्प्रयागे स्नानं योगिसुदुर्लभम् ॥ इति । स्वगाकारः समर्पणम् । “ स्वगाकृता वै पशवः ” इत्यादौ तथा दर्शनात् । ततश्च देहादि सर्वमिदं वस्तुजातं प्रत्यगभिन्नपरमानन्दे विलीयतामिति प्रघट्टकार्थः प्रत्येकस्मिन्मेशब्दश्चिज्जडसंबन्धदाढर्घ्यद्योतनाय ॥ ८ ॥

इति चमकभाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

---

एवं व्यष्टिदेहं विलाप्य समष्टिविराड्देहमपि प्रत्यगभिन्नपरमानन्दे विलापयितुमाशास्ते—

अग्निश्चं मे घर्मश्चं मेऽर्कश्चं मे सूर्यश्च मे
प्राणश्चं मेऽश्वमेधश्चं मे पृथिवी च मेऽ-
दितिश्च मे दितिश्च मे द्यौश्चं मे शक्वरी-
रङ्गुलयो दिशश्च मे यज्ञेनं कल्पन्तामृ-
क्चं मे साम च मे स्तोमश्च मे यजुश्च मे
दीक्षा चं मे तपश्च म ऋतुश्चं मे व्रतं चं
मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे चं मे य-
ज्ञेनं कल्पेताम् ॥ ९ ॥

ननु विरुद्धमेतत्—पारमेश्वरो हि विराड्देहो जीवेन विलापयितव्य इति । नैष विरोधः । जीवात्मन एवावस्थाभेदेनेश्वरत्वात् । तदुक्तमाचार्यैः—“ यथा चेतन आभासः कूटस्थे भ्रान्तिकल्पितः । अचेतनो घटादिश्च तथा तत्रैव कल्पितः ” इति । ततश्च कूटस्थात्मनि व्यष्टिदेहस्य साभासस्यैव जगतोऽपि तत्रैवाऽऽरोपणात् । परमात्मनस्तु केवलं विवर्ताधिष्ठानतया रज्ज्वा इव सर्पेण न कश्चिन्मिथ्याभूतेन जगता संबन्ध इति न कश्चिद्विरोधः : द्विविधो ह्यारोपः । ज्ञातोऽज्ञातश्च । तत्राऽऽद्यः प्रत्यगात्मनि परः परात्मनीत्यवधेयम् । अग्निश्च म इति । अद्यन्ते ना-

न्नविषया अस्मिन्नित्यग्निः स्वर्गलोकः, धर्मवत्संतापकत्वाद्धर्मो नरकः। अं रं शीघ्रं कं सुखं यस्मिन्सोऽरक इति वक्तव्ये रेफसंश्लेषः पारोक्ष्याय। तादृशो ब्रह्मलोकः। सूर्यः प्रसिद्ध आदित्यो योऽयं दृश्यते। प्राणो जगत्प्राणो व्यापको बाह्यवायुः। अश्वमेधः कामजयः। पृथिवी द्विविधा दितिश्चादितिश्च। यस्यामनार्यलोका वर्तन्ते सा दितिः। सैवादितिर्यस्यामार्यलोका वर्तन्ते भरतखण्डादिः। तदुभयसहिता पृथिवी सर्वसाधारणी समुद्रमहागिर्याद्याधारभूता। द्यौरन्तरिक्षं तत्रैव शक्वर्योऽङ्गुल्यो दिशश्चेति। अजवीथ्यो नागवीथ्यो गजवीथ्यश्चेति यथाक्रमं तारापथास्ते सर्वेऽपि ज्ञानयज्ञेन कल्पन्तां परे ब्रह्मणि मयि लीयन्तामित्यर्थः। ऋक्सामनी प्रसिद्धे। स्तोमो मन्त्रस्तोमोऽथर्ववेदप्रसिद्धः। यजुर्यजुर्वेदः। दीक्षा वेदाध्ययनार्थ ब्रह्मचर्यादिनियमः। तपस्तत्त्वज्ञानार्थमैकाग्र्यम् ऋतुरुपासनार्थं श्रवणादिक्रिया। व्रतमग्निहोत्रादिसिद्ध्यर्थं मेखलादि। अहोरात्रयोः सततवृष्ट्यर्थं बृहद्रथन्तरे तत्संज्ञकसामनी। तदेतत्सर्वं यज्ञेन कल्पतामिति पूर्ववत् ॥ ९ ॥

इति चमकभाष्ये नवमोऽनुवाकः ॥ ९ ॥

---

एवं नवमे समष्टिव्यष्टिदेहयोर्विलापनं निरुच्याथ दशमे रोगारोग्यदेवतानां विलापनमुच्यते—

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी
च मे दित्यवाट् च मे दित्यौही च मे प-
ञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे
त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च
मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे
वशा च म ऋषभश्च मे वेहच्च मेऽनड्वान्
च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो
यज्ञेन कल्पता मपानो यज्ञेन कल्पतां व्यानो

यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं
यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्य-
ज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो
यज्ञेन कल्पताम् ॥ १० ॥

गर्भे देहस्याभ्यन्तरे तिष्ठन्तीति गर्भाः प्रसुप्तरोगाः । तदुक्तं सुश्रुते—“देहस्याभ्यन्तरे गूढा गर्भा इव सुसंयताः । तिष्ठन्ति वासनात्मानो रोगाः प्रारब्धसंभवाः ॥ १ ॥ यदा ते संप्रबुध्यन्ते फलाभिमुखकर्मणा । उत्तिष्ठन्ति क्षुधार्तास्ते भवन्ति शिशुका इव ॥ २ ॥ मेदो मज्जा वसा मांसं रुधिरं शुक्रमेव च । अदन्ति कृमयो भूत्वा नानारूपाः समन्ततः ॥ ३ ॥ इति । तथा चायमर्थः-“इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते” इत्युक्तरीत्या महाक्षेत्रमिदं शरीरं रोगाणामारोग्याणां च । सन्ति खलु तत्र नानाजातीयरोगबीजान्यारोग्यबीजानि च विषरूदाण्यमृतरूपाणि च । तानि च जागरे कृमिरूपाणि रोगाद्यारम्भकाणि स्वप्नादौ घोरसात्त्विकदेवतारूपेणोपलभ्यन्ते । तथा च स्वप्नाध्यायविद आचक्षते—“कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना । अवगूहति यं स्वप्ने मृत्युं तस्य विनिर्दिशेत् । शुक्लाम्बरधरा नारी शुक्लगन्धानुलेपना । अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी” इत्यादिना । त्रिविधं हि तासां रूपं स्थूलं सूक्ष्मं परं चेति । तत्र स्थूलं कृम्यादिरूपं सूक्ष्मं स्वप्नादावुपलभ्यमानं परं वासनात्मकम् । तत्र यदा घोरकृमयोऽतिसारादिरोगमारभन्ते पापकर्मप्रेरितास्तदैव फलाभिमुखेन पुण्यकर्मणा प्रेरितास्तत्प्रतिपक्षाः शुभकृमयस्तांश्छिन्दन्ति सगीं कुर्वन्ति च स्वान्तर्गतसुधया विषदोषं च शमयन्ति । इदं स्थूलदेहविषयम् । सूक्ष्मदेहेऽपि शुभाशुभरूपेण वासनाद्वयं ज्ञानाज्ञानरूपेण कारणशरीरे चेत्यवधेयम् । एवं सर्वस्मिन्नुभयरूपतामभिप्रेत्य देवासुराः संयत्ता आसन्नित्याद्यर्थवादाः प्रवृत्ताः । वत्साः प्रबुद्धरोगाः । उभयेऽप्येते स्थूलशरीरे तिष्ठन्तीति प्रसिद्धतरम् । इतः परं “भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा” इत्युक्ताष्टविधप्रकृतेः स्त्रीपुरूपेण द्वैविध्यमाह । तत्र स्त्रीरूपा प्रकृतिरारोग्यकरी पुंरूपा रोगकरीति ज्ञेयम । इमाविस्त्रिविधा पृथिवी । यस्यां देवा मनुष्याः पितरस्तिष्ठन्ति । त्र्यवी पुनस्त्रिविधो

भगः पुंरूपः इव सस्यविशेषाद्यनुत्पत्तेः । तस्मिन्नसुरा रक्षांसि पिशाचा वसन्ति । तथा च श्रुतिः—" देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतः " इत्यादि । अदितिः पुनर्वसुनक्षत्रमदित्यं तत्प्रभृतिनक्षत्रवर्गं वहति जगद्यात्रामित्यदित्यवाट् । जलरूपा देवता । साऽपि शान्ताऽशान्तेति द्विविधा । तत्र रुधिरकरकाविद्युत्पातादिरहिता शान्ता, तद्विपरीताऽशान्ता । सा दित्यौहीशब्देनोच्यते । पुंस्त्वं पूर्ववत्कार्यविशेषाभावादुघातकत्वाच्च । तथा च श्रुतिः—तदेतद्यजुर्नं ब्रूयाद् दिव्या आपो शान्ता इमं लोकमागच्छेयुः " इत्यादिः । एवमनलोऽपि प्राणापानादिभेदेन पञ्चाविः पञ्चधा । आभ्यन्तरो बाह्यश्च । पूर्वदिश्यः प्राणः । अपरदिश्योऽपान इत्यादिभेदात् । अत एव श्रुतिः " पुरोवातो वर्षजिन्वरावृत्स्वाहा " इत्यादिभेदान्व्याचष्टे । स एव विविधोत्पातकारी पञ्चावी पञ्चप्रकारः । तथा चोक्तम्—" तीरमज्जस्तरूत्पाटी चक्रवातस्तृतीयकः । रोगवाही चतुर्थः स्यात्तथोल्मुकपिशाचकः " इति । पुंस्त्वं प्राग्वत् । त्रयाणां लोकानां वत्से वक्षसीव वर्तमानः सूर्यस्त्रिवत्सः । तस्यैव शक्तिश्चन्द्ररूपा त्रिवत्सा वनस्पत्यौषध्यादिहितकरी । तद्विपरीतः सूर्यः । अत्र पाठक्रमादर्थक्रमो बलीय इति न्यायेन तेजस उत्तरनिपातो न विरुध्यते । एवं पुंरूपायाः स्त्रीरूपायाः प्रकृतेश्च पूर्वपरनिपातः । तुर्यं ब्रह्म वहतीति तुर्यवाड् गगनं हार्दाकाशं तुर्यौही भूताकाशं तदावरकम् । तथा च श्रुतिः—एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्यादिः । मनोऽपि द्विविधं शुभमशुभं चेति । तत्र पष्ठैः प्रेष्ठाविषयैर्वा वाह्यते वशी क्रियत इति पष्ठवाट्, अशुभं मनः । पष्ठांस्तानेव विषयान्वशी करोतीति पष्ठौही शुभं मनः । तथा चोक्तम्—" मन एव मनुष्याणां कारणं बन्धमोक्षयोः " इति । उक्षा बलीवर्दवदज्ञो बुद्धिस्थचिदाभासः । अत एव सा बुद्धिरपि वशा वन्ध्या नाद्यापि ब्रह्मविद्यां प्रसूयते । अहंकारस्त्वृषभो बालबलीवर्दः । वेहद् बालधेनुः । अनड्वान् सकलब्रह्माण्डधुरं वोढुं समर्थः प्रत्यगात्मा । धेनुर्ब्रह्मविद्या—उपह्वये सदुघां धेनुमेतामित्यादौ विद्यायां धेनुशब्दप्रयोगदर्शनात् । इयं नवमी परा प्रकृतिः । तदुक्तं गीतासु " अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् " इति । तदेतत्सर्वं यज्ञेन कल्पतामित्यन्वयः । तत्र सर्वस्य भूतजा-

तस्य प्रत्यगात्मनि लये सत्यपि कथं तल्लय उपपद्यत इति चेत्परमात्मना सहैकत्वज्ञानमित्यवेहि । आयुरिति । मयाऽऽयुरप्यवशिष्टं यदस्ति तदपि यज्ञेन कल्पतां समाप्यताम् । विरक्तस्य न किमप्यायुषा कृत्यमस्तीति भावः । प्राणाद्या वागन्तास्तत्तदभिमानिन्यो देवताः । आत्मा च तदाधारभूतो देहः । यज्ञो यजनात्मिका क्रिया । तदुभयमपि प्रत्यगभिन्नपरमानन्दे विलीयतामित्यर्थः ॥ १० ॥

इति चमकभाष्ये दशमोऽनुवाकः ॥ १० ॥

---

एवं दशमे सर्वोपसंहारमभिधाय न चानिष्टे समापयेदिति न्यायमनुसृत्य निर्विकल्पे वस्तुन्यध्यारोपप्रकारमाह–

एका च मे तिस्रश्च मे पञ्च मे सप्त च मे
नव च म एकादश च मे त्रयोदश च मे
पञ्चदश च मे सप्तदश च मे नवदश च
म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे
पञ्चविꣳशतिश्च मे सप्तविꣳशश्च मे नव-
विꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳ-
शच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च
मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳ-
शतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च
मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे
चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे
वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च
मूर्धा च व्यश्नियश्चाऽऽन्त्यायनश्चान्त्य-
श्च भौवनश्च भुवनश्चाधिपतिश्च
॥ १ ॥

सकलजगदुपादानमेकैव प्रकृतिः पूर्वमासीत् । " एकैवाहं जगत्यत्र द्वितीया का ममापरा । पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः " इति मार्कण्डेयपुराणोक्तेः । ततस्तिस्रो गुणत्रयरूपिण्यो देवतास्ता मम प्रसन्नाः सन्त्विति सर्वत्रान्वयः । ताभ्यश्च पञ्च महाभूतानि तेभ्यश्चापञ्चीकृतेभ्यो ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति सप्त संजातानि । तेभ्य एव पञ्चीकृतभ्यो नवद्वारोपलक्षितस्थूलदेहः । तत्र दश प्राणास्तदाधारभूता सुषुम्ना चैका । एवमेकादशभूतसत्त्वांशेभ्यस्त्रयोदश देवताः । करणानां पुष्या युगंधरा शङ्खिनीत्याद्याः श्रोत्रादिनाड्यश्चतुर्दश सुषुम्ना पञ्चदशीत्येवं पञ्चदश । सप्तदश लिङ्गशरीरावयवाः । नवदश संजीवनी व्रणविरोपिणी व्रणघ्नी सहदेवी ब्राह्मी मुण्डीत्याद्या एकोनविंशतिर्महौषध्यो नागार्जुनतन्त्रादौ प्रसिद्धाः । एकविंशतिर्मर्माणि वैद्यकप्रसिद्धानि । ज्वरातिसारपाण्डुक्षयाद्याख्यत्रयोविंशतिर्महारोगाः । उर्वशीतिलोत्तमासुकेशीमञ्जुघोषापूर्वचित्तिरम्भामेनकाप्रम्लोचाद्याः पञ्चविंशतिः प्रसिद्धा अप्सरसस्ताः स्वर्ग इव देहेऽपि तिष्ठन्ति । तथा हि—पूर्वचित्तिश्चित्तं बुद्धिस्तिलोत्तमा मन उर्वशी अविद्या रम्भा परोक्षाविद्या मेनका तत्कन्या गौरी अपरोक्षविद्येति । श्रोत्रं मञ्जुघोषा त्वगनुम्लोचा चक्षुः प्रम्लोचा रसनं सुकेशी घ्राणं सुरभिला वाक् वाग्वादिनी सपाणि हस्तेन्द्रियं श्यामला पादेन्द्रियस्य सुपेशा पायुरिन्द्रियस्य सुभगा भवस्येत्यादि योगलतिकायां विस्तरः । चित्रसेनविश्वावसुनारदाद्या गन्धर्वाः सप्तविंशतिः । वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिरिति श्रुत्यन्तरात् । ज्योतिष्मत्याद्या एकोनत्रिंशद्विद्युद्देवताः कृत्याशब्दवाच्याः श्रुतिप्रसिद्धाः । तथा च श्रुतिः—
" ज्योतिष्मतीं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि " इत्याद्यनुवाकरूपाः । एकत्रिंशद्भुवनानि । तद्यथा—भूर्भुवरादिस्वर्गलोकान्ताः सप्त अतलादिपातालान्ताः सप्त वैकुण्ठलोको राधालोको गोलोको मणिद्वीपं महाकालपुरं शिवपुरं गणेशलोकश्चेति सप्तोपस्वर्गाः । अयोध्या मथुरा मायेत्याद्याः सप्त भूस्वर्गाः । कैलासो मानसं मेरुश्चेति ब्रह्मलोकावान्तरभेदाः । एवमेकत्रिंशत् । तथा—अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या अश्विनौ प्रजापतिस्त्रयस्त्रिंशद्देवताः । एवं विषमाङ्कैर्देवच्छन्दो विस्तरशोऽभिधाय मनुष्यच्छन्दोविकल्पमाह—चतस्र इत्यादिना । तथा च

श्रूयते—“ एका च मे तिस्रश्च म इत्याह देवच्छन्दसमेका च तिस्रश्च मनुष्यच्छन्दसं चतस्रश्चाष्टौ च ” इत्यादि । तत्र धर्मार्थकाममोक्षविद्याश्चतस्रः । चत्वारो वेदाश्चत्वार उपवेदाश्चेत्यष्टौ । षडङ्गानि षट् शास्त्राणीति द्वादश । षोडश महाविद्याः सिद्धिरूपाः । तद्यथा—दूरश्रवणदूरदर्शनाद्याः । पञ्च ज्ञानेन्द्रियसिद्धयः । वाक्सिद्धिरप्रतिहतगतिर्दूरग्रहणमित्याद्याः पञ्च कर्मेन्द्रियसिद्धयः । स्थापत्यविद्या पर्जन्यविद्या ज्योतिर्विद्याऽऽयुर्विद्या परोक्षब्रह्मविद्या चेति पञ्च द्विविधमन्त्रश्चित्तबुद्ध्यहंकाराणां यथाक्रमं ज्ञेयाः । अपरोक्षब्रह्मविद्या तु महत्तत्त्वस्येत्येवं षोडश । महाभूतानि स्थूलसूक्ष्मभेदेन दश । विषया अपि स्थूलसूक्ष्मभेदेन दशेत्येवं विंशतिः । चतुर्विंशतितत्त्वानि प्रसिद्धानि । अष्टाविंशतिस्तिरश्चां भेदा गौरजो महिषः कृष्ण इत्यादिना भागवतादौ प्रसिद्धाः । अष्टविधो देवसर्गः । षड्विधः स्थावरसर्गः । कौमारमानुषसर्गौ द्वौ । ऐन्द्रियसर्गो दशविधो ज्ञानक्रियात्मकः, अहंकारस्त्रिविधस्त्रयो गुणाश्चेति द्वात्रिंशत् । अथवा किमनेन क्लेशेन प्रकारान्तरेणोपपादयामः । चतुर्विंशत्यक्षरा गायत्री । अष्टाविंशत्यक्षरा उष्णिक् । षट्त्रिंशदक्षरा बृहती । चत्वारिंशदक्षरा पङ्क्तिः । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । अष्टाचत्वारिंशदक्षरा जगती । शेषाणामत्रैवान्तर्भावः । एतेषां च मनोमयत्वात्तल्लये मनसोऽपि लयः स्यादिति भावः । वाजाद्यधिपत्यन्ता द्वादशाऽऽदित्याः पिण्डब्रह्माण्डयोः समानाः । तत्र पिण्डे पञ्च ज्ञानेन्द्रियाणि[ पञ्च कर्मेन्द्रियाणि ]मनो बुद्धिश्चेति द्वादश । ते सर्वेऽपि यज्ञेन कल्पन्तामित्यर्थः ।

इति चमकभाष्य एकादशोऽनुवाकः ॥ ११ ॥

---

अथास्य शतरुद्रीयस्य शान्तिपाठोऽभिधीयते—

**इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि**
**शꣳसिषद्विश्वेदेवाः सूक्तवाचः पृथिवि**
**मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनि-**
**ष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं**

देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्ये-
भ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु-
मदन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

इडा गोरूपिणी ब्रह्मविद्या । सा च स्वसत्तया देवाह्वानकरत्वात् देवहूतिरित्युच्यते । इडे रन्ते दिते सरस्वतीत्यादिमन्त्रलिङ्गात् । "गायन्तं त्रायसे यस्माद्गायत्री त्वं प्रतिष्ठिता" इति स्मृतेः । ब्रह्मगन्धर्वा अवदन्नगायन्देवाः 'सा देवान्गायत उपावर्तते" इत्यादिश्रुतेश्च । तथा मनुर्मन्त्ररूपा वाग्देवता । सा च कर्ममार्गोपदेशकत्वाद्यज्ञं नयति प्रापयतीति यज्ञनीः, इत्युच्यते । तथा ब्रह्म वै देवानां बृहस्पतिरिति श्रुत्या प्रतिपादितः कर्मसाक्षी परमेश्वरः । द्वितीयः स्वप्रकाशपरमानन्दरूपः साक्षी प्रत्यगात्मा तु तत्पुरुषशब्देन व्यवह्रियते । तंत्वौपनिषदं पुरुषं पृच्छामीति प्रसिद्धं तं पुरुषम् । उक्थामदानि कर्मजन्यानि सुखानि शशंसिषत्प्रतिपादयन्नास्ते । ये च सूक्तवाचः शोभनवाचस्तदीयं भद्रमाशंसमाना विश्वेदेवाः पूर्वोक्तदेवतासहितविश्वेदेवा मां मा हिꣳसिष्ट । तथा हे पृथिवि मातः मां मा हिंसीः किमित्येवमस्माभिः कार्यमित्याशङ्कायामाह—अहं तावद्युष्माकं मधु मधुरं स्वरूपं मनिष्ये मनसा चिन्तयिष्ये । तथा मधु मधुरं युष्माकं स्तोत्रं जनिष्ये जनयिष्ये । अहं स्वतो मधु वक्ष्याम्यन्यानाति स्वजनान्मधु वदिष्यामि । तथा मधुमतीं हविर्युक्तामेव वाचं कर्माभिमानिभ्यो देवेभ्यो वाचमुद्यासमुद्यच्छे न तु रिक्तामित्यर्थः । मनुष्येभ्यस्तु सुश्रेण्यां श्रोतुं योग्यां यथार्थामेव वाचमुद्यासमुद्यच्छे न तु मृषाभूतामित्यर्थः । एवं यथोक्तकर्तारं तं मां देवा अवन्तु रक्षन्तु शोभायै जगति यथाऽहं कीर्त्यादिना शोभिष्ये तथा पितरोऽप्यनुमदन्त्वनुमोदन्ताम् । शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं शिष्योपदेशार्थम् ।

रसभूनागाब्जाङ्कैर्गणिते श्रीशालिवाहनस्य शके ।
प्राप्तेऽथ हेमलम्बिनि नामनि संवत्सरे वसन्ततौं ॥ १ ॥
माधवमासस्यासितपक्षे ऋक्षे शुभे त्रयोदश्याम् ।
मन्ददिने प्रातरिदं पुस्तकमभवाद्विलिख्य संपूर्णम् ॥ २ ॥

गुरुसदननिवासी साहकारीत्युपाह्वः
शुभतरहृदनन्तः पाण्डुरङ्गाङ्गजातः ।
विरचितमतिधीभिर्विष्णुनामाभिधेयै-
र्गुरुभिरलिखदेतद्रुद्रभाष्यं समग्रम् ॥ ३ ॥

---

इति श्रीविष्णुसूरीन्द्रविरचितः शतरुद्रीयशान्तिपाठभाष्यानुवाकः ।

इति श्रीरुद्रभाष्यं संपूर्णम् ॥